he delineates on the Vedic word Parśu and gives details of the origin of Gāndhārī. Twenty-seventh section discusses about the origin of Dhṛtarāṣṭra. Here the Muni makes it clear that the Vedic Dṛk is Dhṛtarāṣṭra of the Epic. In the next section, he supposes that the Vedic Kavaṣa was the family priest of the Pāṇḍavas. In twenty-ninth section, the Muni cites a *Mantra* from the *Rigveda* to show the origin of the story of gambling in the *Mahābhārata*. In the thirtieth section, the Muni gives the names of the sons of Indra as they appear in *Rigveda* and then identifies them with the sons and relatives of Kṛṣṇa. According to him, Vedic Vimada is Sāmba, Apratiratha is Sātyakī, Lava is Pradyumna. The next section describes vividly the story of the birth of Karṇa. In the thirty-second section, the Muni depicts the story of Narakāsura as it appears in *Rigveda* and identifies him with Karṇa. The next section too deals with the identification of Karṇa with Bhagadatta. In the last section, the Muni gives an account of the origin of Balarāma and his relationship with others. He says that the Vedic Ahirbudhnya is Balarāma of the Epic. Here the Muni authoritatively deals with Śeṣanāga, Revatī, Rohiṇī and relationship of Balarāma with Karṇa.

The entire text of this treatise is the outcome of an authentic research on the Vedas as well as the *Mahābhārata*. It is a challenging step towards establishing the validity of the Vedic origin of the *Mahābhārata*. The diction of the Muni, here, bears the witness of a distinctive and stylish elegance. Indeed, *Bhāratacaritramīmāṁsā* is an exposition of surpassing excellence showcasing the unusual and impressive intelligence of Kavyakantha Ganapati Muni.

# भारतचरित्रमीमांसा

## प्रथमं प्रकरणम्

## महाभारतकविनिरूपणम्

इन्द्रं विश्वस्य राजानं ब्रह्माणं ब्रह्मभिर्नुतम् ।
आत्मानं सर्वभूतानां सन्तं सर्वगतं नुमः ।।

अथ भारतचरित्रशोधने प्रकृते तदङ्गतया जिज्ञासितचरित्रप्रतिपादकस्य परिदृश्यमानमहाभारतग्रन्थस्य प्रामाण्यबलं ज्ञातुं तत्कविविचारः प्रथमं क्रियते ।

परिदृश्यमानं महाभारतं सर्वमपि कृष्णद्वैपायनमुनिर्विरचितवानिति साम्प्रदायिकानां विश्वासः । मूलभारतं किमपि द्वैपायनस्य । तद्बहुभिरंशैः संयोज्य महाभारतं कृतमन्यैरिति नव्याः । विमर्शकवरश्चिन्तामणि-विनायकवैद्याचार्यः प्रकृतमहाभारतस्वरूपस्य निष्पादयिता सौति-रुग्रश्रवा इति निर्धारयति ।

तस्मिन् विषये तत्र भवता – "एकं शतसहस्रं तु मयोक्तं वै निबोधत ।" इति महाभारतवचनमेव प्रमाणत्वेन गृहीतम् । पर्याप्तमत्रविषये तदिदं प्रमाणमित्यस्माकमाशयः । ये समग्रं महाभारतं द्वैपायनप्रोक्तं वदन्ति ते प्रष्टव्याः । किं वैशम्पायनजन्मेजयसंवादात्सौतिमुनिसंवादाच्चानन्तरं

द्वैपायनो महाभारतं रचितवान् ? उताहो पूर्वम् ? नाद्यः । सौतिना वैशम्पायनेन च प्रागेव द्वैपायनेनेतिहासो रचित इति स्पष्टमभिधानात् । ग्रन्थनिर्माणस्य संवादद्वयानुसारित्वे द्वैपायनस्य परोपजीव्यत्वप्रसङ्गाच्च । न द्वितीयः । ग्रन्थस्यानागतसंवादात्मकत्वस्यानुपपत्तेः । तस्मात् संवादद्वयात्प्रागेव द्वैपायनेन रचितं मूलभारतं संवादद्वयसमाप्तेरनन्तरं संस्कृतमिति पक्ष एव साधीयान् । नवानामधिकांशानां संयोजनं केषाञ्चिन्मूलस्थानामंशानामुद्धरणं मूले संङ्कुचितानां केषाञ्चिदंशानां विस्तरणं मूले विस्तृतानां केषाञ्चिदंशानां सङ्कोचनं चेति संस्करणपदार्थः । उदाहृते वचने सौतेरेव वक्तृत्वान्मयेत्यनेन तस्यैव प्रत्ययः । स्वस्य काले प्रचारस्थं भारतं सौतिः संस्कृतवान् । तदेव महाभारमित्युक्तं भवति । संस्कर्ता संस्कृतामपि संहितां मूलकारस्यैव नाम्ना प्रकटितवान् इति विशेषः ।

महाभारतसंहितानिष्पत्तेरनन्तरमपि कतिपयं कालं मूलभारतं प्रचारे पृथगप्यतिष्ठदिति विज्ञायते । यदाश्वलायनाचार्यो निजे गृह्यसूत्रे देवर्षिपितृतर्पणसन्दर्भे - ''सुमन्तुजैमिनिवैशम्पायनपैलसूत्रभाष्य-भारतमहाभारतधर्माचार्याः'' इति सूत्रयति । सूत्रादिधर्मपर्यन्तैः शब्दैराचार्यपदं प्रत्येकमन्वेति । अत्र भारताचार्यमहाभारताचार्ययोः पृथक् पृथक् तर्पणं विधीयते । अनेनाश्वलायनस्य काले भारतमहाभारते पृथगतिष्ठतामिति प्रतीतं भवति । किञ्च मूलभारतान्महाभारतमिव भारताचार्यात् महाभारताचार्यः पृथगिति प्राचीनतरं सूत्रमिदं बोधयति । कालक्रमेण लेखकप्रचाराभावान्मूलभारतं पृथक् सत्तां विजहौ ।

अयं चाश्वलायनेनोल्लिखितो महाभारताचार्यः सौतिरिति न पृथग्वक्तव्यम् ।

अथ को भारताचार्यः? अत्रैषा चर्चा भवति ।

मन्वादिभारतं केचिदास्तीकादि तथापरे ।
तथोपरिचराद्यन्ये विप्राः सम्यगधीयते ।।

इति महाभारतस्य श्लोके त्रयो भारतारम्भा उक्ताः । तेनैतच्छ्लोक-निर्माणकाले त्रीणि भारतान्यवर्तन्तेति प्रतीतं भवति। अत्राचार्यवैद्यः समन्वयमेवं कुरुते – "मन्वादिभारतं महाभारतम् । ओं नमो भगवते वासुदेवायेति मन्त्रेणारब्धत्वात्। तत्सौतेः। आस्तीकचरितादिभारतं आस्तीकादि। तत्सामान्यतो भारतम्। तद्वैशम्पायनस्य। उपरिचर-चरितादिभारतमुपरिचरादि। स जयेतिहासो द्वैपायनस्य। तस्य भारतनाम गौणम् । एवं कृष्णद्वैपायनस्य मूलग्रन्थो द्विवारं संस्कृतः । प्रथमं संस्करणं न तथा प्रचण्डं यथा द्वितीयम् । आश्वलायनेनोल्लिखितो भारताचार्यस्तु वैशम्पायनः स्यात् ।" इति।

परे त्वाहुः – "द्वैपायनरचितस्य जयेतिहासस्यैव भारतमिति नामान्तरम् । तदुपरिचरादिभारतमेव भवति । तस्य द्विवारं संस्करणं संवृत्तम् । प्रथमः संस्कर्ता सौतिः । द्वितीयः सौतिवंश्यः कश्चिदन्यः कविः । आश्वलायनेनोल्लिखितो भारताचार्य कृष्णद्वैपायन एव भवति । यदि वैशम्पायनो भारताचार्य इत्यङ्गीक्रियेत तर्हि कष्टद्वयम् आपतेत् । एकस्यैव वैशम्पायनस्य व्यक्तिनाम्नैकं तर्पणं गुणकृतेन नाम्ना-ऽन्यत्तर्पणमिति प्रसज्यते । त्यक्तं प्रसज्येत च पूज्यतमस्य कृष्णद्वैपायनस्य तर्पणम् । अस्माकं नये तु परिहृतौ द्वावप्येतौ दोषौ ।" अन्यच्चास्ति कष्टम् । व्यासवैशम्पायनसौतयो जयभारतमहाभारतकवय इति वदद्भिर्हरिवंशश्च सौतेरङ्गीकर्तव्यः स्यात् । पीठिका च सौतेरित्यभि-धातव्यं स्यात् । मन्वादिभारतमिति श्लोकस्य चतुर्थभारतप्रतिकूलत्वात् । सौतेरेव तदुभयमित्यङ्गीकारे का विप्रतिपत्तिरिति चेत् । सन्ति बहवो

विरोधाः । प्रथमः प्रमाणविरोधो भवति ।

यथावत्सूतपुत्रेण रौमहर्षणिना पुनः ।
उक्तानि नैमिषारण्ये पर्वाण्यष्टादशैव तु ॥

इति पर्वसङ्ग्रहे सौतेरष्टादशपर्वमात्रकार्यत्वमुच्यते । एवत्विति विषयान्तरव्यवच्छेदात् खिलग्रन्थोऽन्यस्यैवेति स्पष्टं प्रतीयते । तत्र भवान् वैद्योऽपि निजे भारतोपसंहारग्रन्थे ययातिपुत्रवंशप्रस्तावे (पृष्ठम् २०९ द्वितीया वृत्तिः) "हरिवंशस्य लेखनं परीक्षणं वा सौतितो नासीदिति दृश्यते।... प्राचीनग्रन्थानामैतिहासिकप्रामाण्यपरीक्षायां पूर्वपूर्वस्य प्रामाण्यमधिकमित्यङ्गीकर्तव्यम् । तथाहि हरिवंशापेक्षया महाभारतस्य प्रामाण्यमधिकम् । महाभारतापेक्षया वेदाङ्गानां वेदाङ्गापेक्षया ब्राह्मणानां ब्राह्मणापेक्षयां मंत्रसंहितानां विशेषत ऋग्वेदसंहितायाश्च प्रामाण्यं श्रेष्ठम् इति वदन्नङ्गीकरोतीमं विषयम्।"

द्वितीयः प्रत्यक्षापलापः । अनुक्रमणिकापर्वणि सौतिर्नैमिषारण्यवासिभ्यः स्वयं सर्पसत्रे वैशम्पायनप्रोक्तमहाभारतकथां श्रुत्वा तीर्थाटनं कृत्वा समागतोऽहमिति वदति । सौतिरेव चेदनुक्रमणिकायाः कर्ता नैवं प्रत्यक्षापलापमकरिष्यत् । क्व सौतेः काल ? क्व जन्मेजयस्य ?

तृतीयः प्रकरणविरोधः । पूर्णग्रन्थसमाप्तेरनन्तरं संयोजितायां पीठिकायां मुख्यग्रन्थारम्भे करणीयस्य संवादावतरणस्यानौचित्यात् । अस्ति च चतुर्थाध्याये संवादावतारः । तस्माद्वैशम्पायनस्य कवित्रयमध्येऽसंयोजनं श्रेयः। अस्माकं नये तु द्वितीयमास्तीकादि भारतमेव सौतेर्महाभारतम्। आस्तीकशब्दश्चास्तीकचरित्रपरः । नास्तीकपर्वपरः । पौलोमाख्यानस्यास्तीकचरिताङ्गत्वादास्तीके सङ्ग्रहः । अन्यथा तस्य

महाभारतादौ न्यासस्यैव नोपपत्तिः । सपीटिकं सपौष्यं सखिलं महाभारतमेव मन्वादिभारतम् । तृतीयः कविः सुतरां कृष्णभक्तः । श्रीकृष्णचरित्रस्य महाभारते स्तोकत्वादेवासन्तृप्तः स हरिवंशं निजान्वयपरम्पराश्रुताः कथा अनुसृत्य विरच्य महाभारतेन संयोजितवान् । अध्यायद्वयात्मिका पीठिकाऽपि तस्यैव भवति । यद्यपि पौष्यपर्वभाषाऽतीव प्राचीना । तथापि न तत्पर्व सौतेर्महाभारते । ग्रन्थादौ भवितुमुचितस्य सौतिमुनिसंवादावतरणस्य पौलोमादावेव दर्शनात् । तृतीयः कविरेव सिद्धमेव स्वगृहे स्थितमितिहासद्वयं पीठिकानन्तरं न्यस्तवान् । तत्पौष्यं वर्वोच्यते । तत्र प्रथम इतिहासस्त्वपूर्ण एव दृश्यते । अपूर्ण एव स कवेरुपलब्धः स्यात् ।

हरिवंशस्य खिलसंज्ञा च परिशिष्टत्वात् । विप्रलुप्तत्वं परिशिष्टत्वं वा खिलत्वम् । अयं च खिलकारः स्वस्यापि कृतिं मूलग्रन्थकारायैव समर्पितवान् । निरुक्तगृह्यसूत्रकल्पसूत्रादिषु प्राचीनग्रन्थेषु चैतादृश-परिशिष्टसंयोजनं मूलाचार्यायैव कृतिसमर्पणं च दृश्यते ।

अयं च तृतीयः कविस्त्रीनैतिहासिकान्विषयानस्मभ्यं प्रदर्शितवान्।

"चतुर्विंशतिसाहस्रीं चक्रे भारतसंहिताम् ।
उपाख्यानैर्विना तावद्भारतं प्रोच्यते बुधैः ।"

इति श्लोकेन मूलभारतसंहितायाः पृथक्त्वं श्लोकसङ्ख्यां च वेदयति । द्वैपायनो भगवानृषिरिति कर्तृपदं पूर्वतोऽत्रानुवर्तते । वैशम्पायनवादिना कर्तृपदं अनुवर्तमानं विसृज्य स्वाभिलषितं कर्तृपदमध्याहार्यं प्रसज्येत।

"एकं शतसहस्रं तु मयोक्तं वै निबोधत ।"

इत्यर्धश्लोकेन महाभारतकविविषयकं ज्ञानं शोधकेभ्यो ददाति ।

मन्वादिभारतमिति श्लोकेन भारतस्यात्मना कृतं द्वितीयं संस्करणं च बोधयति । दूरदृष्टवशात्तस्य नामास्माभिर्न ज्ञायते।

अयं सारांशः । व्यासो भारताचार्यः सौतिर्महाभारताचार्यः । महाभारतय पीठिकाखिलयोः संयोजकः सूत्रकारादाश्वलायनादर्वाचीनः कश्चित्सूतवंश्यः । इति वयं तु ब्रूमः । भवतु नाम पीठिकाखिलकारः सौतेरन्यस्तद्वंश्यः। भवन्तु नाम द्वैपायनसौतितद्वंश्यानां त्रीणि भारतानि । भवतां नाम व्याससौतीभारतमहाभारताचार्यौ । तथापि वैशम्पायनः कृष्णस्य मूलभारतं संस्कृतवानल्पमिति वैद्याचार्योक्तं सत्यम् इत्येवाङ्गीकर्तव्यम् । वैशम्पायनकृतस्य संस्करणस्याल्पत्वात्तत् संस्कृतस्य ग्रन्थस्य मूलादपृथग्भूतत्वाच्च संस्कर्तुस्तस्य भारताचार्यत्वं नेत्येवं वैद्योक्तादस्मदुक्ते विशेषः ।

परिदृश्यमाने महाभारते किञ्चिद्वैशम्पायनसंस्कृता कृष्णद्वैपायनस्य मूलभारतसंहिता विकृतैर्निजैरवयवैर्लीना तिष्ठतीति वक्तव्यम् । उपाख्यानानि सर्वाण्यपि प्रायः सौतेः । यदाख्यानं तत्रापि न सौतेर्न हस्तक्षेपः । किञ्चिदूनाधिकचत्वारिंशत्सहस्रश्लोकमितमाख्यानं हि दृश्यते । चतुर्विंशतिसहस्रश्लोकात्मकैव द्वैपायनस्य मूलसंहितेति ततोऽधिकः सर्वोऽप्याख्यानभागः सौतेरित्यङ्गीकर्तव्यं स्यात् । तस्मादाख्यानेऽपि किं कृष्णद्वैपायनोक्तं किं वा सौतिनोक्तमिति निश्चेतुं श्रमो भूयान्भवति । तस्मात् । प्रामाण्यपरीक्षायां परिदृश्यमानं महाभारतं सौतेर्ग्रन्थत्वेनैव विलोकनीयम् । सौतिश्च महान्पौराणिकः ।

द्वितीयं प्रकरणम्

## महाभारतनिर्माणकालः

सौतेर्महाभारतसंहिताप्रणयनकालश्चेशपुत्रशकात्पूर्वं तृतीयम् अब्दशतकमिति तत्रभवतो वैद्यस्य मतम् ।

"एडूकचिह्ना पृथिवी न देवगृहभूषिता ।"

इति महाभारते भविष्यत्कलिवर्णनप्रस्तावे भूमेर्बुद्धास्थिगर्भ-स्तूपसहितत्वं भावित्वेन सूच्यते । अशोकस्य काले तादृशं सङ्घटनमासीदिति महाभारतकविरशोकादर्वाचीनो वक्तव्यः । कविना स्वानुभूतार्थस्यैव योग्यस्थले भाविकथनव्याजेनाभिहितत्वात्।

समग्रे महाभारते नास्ति राशीनामुल्लेखः । तस्मादस्मदीयानां राशीज्ञानात्प्रागेव महाभारतनिर्माणं संवृत्तमिति शोधकानामेक-कण्ठोऽभिप्रायः । यवनेश्वरस्य मिलिन्दस्य दण्डयात्रातोऽनन्तरमेव ज्योतिर्विद्यवनसहवासप्राबल्यदार्यावर्ते राशिज्ञानमारब्धम् । मिलिन्दश्च शुङ्गसाम्राज्यस्थापकस्य पुष्पमित्रस्य समकालिकः । (ई. पू. १५०) यतस्तयोर्युद्धमभूत् ।

तस्माद्युक्तमुक्तमाचार्येण महाभारतसंहिताप्रणयनकालः प्रागीशपुत्र-शकात्तृतीया शताब्दीति तदैवाशोकप्रचारितं बोद्धमतमुन्मूल्य पुनः सनातनधर्मं स्थापयितुं कस्यचित् सर्वजनावर्जकस्य सर्वविषय-

सागरस्य सर्वसुगमस्य महतो ग्रन्थस्य निर्माणं प्राप्तावसरमासीदित्याचार्यस्य साधुस्तर्कः । तं भारमुवाह बहुतन्त्रविन्निपुणो महाकविः सौतिः । बहुजनप्रियं भारतमेव बहुलैरंशैः संयोज्य स महाभारतं कृतवान् । आदितः प्रायेण केवलमितिहासात्मको ग्रन्थः सौतिना विचित्रः शास्त्रव्युहोऽकारि। धर्मं जिज्ञासमानानां महद्धर्मशास्त्रं तत् । राजनीतिं जिज्ञासमानानां श्रेष्ठं नीतिशास्त्रम् । ब्रह्मजिज्ञासमानानां उत्तमं ज्ञानशास्त्रम् । योगं जिज्ञासमानानां रहस्यं योगशास्त्रम् । भक्तानां भावोद्दीपकं भगवत्तन्त्रम् । कथाः शुश्रूषमाणानां विचित्रार्थं पुराणम्। सहृदयानामावर्जकं रसवन्महाकाव्यम् ।

को वाऽनेन महाभारतनिर्माणकालज्ञानेन भारतचरित्रः शोधनस्योपकारः अस्ति महानिति ब्रूमः । ज्ञाते महाभारतनिर्माणकाले चरित्रकालाद् ग्रन्थनिर्माणकालः सुतरां अर्वाचीन इति ज्ञातं स्यात् । तेन महाभारतप्रोक्ताः साङ्घिकव्यवस्थामतसिद्धान्तादयः किं चरित्रकालसम्बद्धाः उताहो ग्रन्थनिर्माणकालसम्बद्धाः इति प्रश्नः प्रादुर्भवेत् । उभयथाऽपि सम्भवात् । विविधैरुपायैश्चरित्रकालसाङ्घिकव्यवस्थादिकं विज्ञाय ग्रन्थे तदेव प्रकाशयितुमस्त्यवकाशः कवेः । आत्मकालसाङ्घिकव्यवस्थादिकमेव सनातनं मत्वा सनातनत्वेन दर्शयितुमिच्छया वा तस्येव ग्रन्थे चरित्रकालसम्बद्धत्वेन वर्णनं च सम्भाव्यम् । तत्र विमृश्य किमपि निर्धारयितुं चरित्रशोधकस्यावकाशो मिलेत् । उत्तरत्र कतिपयेषु प्रकरणेषु करिष्यमाणस्य तादृशस्य विमर्शस्येदं प्रकरणं पूर्वाङ्गं भवति ।

तृतीयं प्रकरणम्

## भारतचरित्रकालनिरूपणम्

उक्ताः कवयो भारतमहाभारतखिलानाम् । महाभारतस्य प्रकृतस्वरूपनिष्पत्तिकालश्चोक्तः । सम्प्रति मूलग्रन्थस्वरूपनिष्पत्तिकालनिरूपणं प्राप्तावसरम् । अनन्तरं चरित्रकालनिरूपणं कर्तव्यम् । तथाऽपि प्रकृते चरित्रकालनिरूपणात् प्राङ्मूलग्रन्थकारकालो निरूपयितुमशक्यः उभयोस्तादृशं सम्बन्धं महाभारतकविः कल्पितवान् । तस्मात्प्रथमं भारतचरित्रकालं निरूप्यैव मूलग्रन्थकारकालं पश्चान्निरूपयिष्यामः ।

कलियुगारम्भात् किञ्चित्पूर्वं भारतयुद्धं चलितमिति वैद्याचार्यस्याभिप्रायः । एवमेव साम्प्रदायिकाश्च मन्यन्ते । इतरे शोधकाः कालं प्रायस्ततोऽर्वागेव नेतुं प्रयतन्ते । वैदिकवाङ्मयप्रमाणावलम्बनं पूर्वस्य शोधनम् । अर्वाचीनवाङ्मयप्रमाणवलम्बनानीतरेषां शोधनानि । इतरेभ्यः शोधकेभ्यस्तर्कशुद्धानि प्रत्युत्तराणि तत्र भवता वैद्येनैव दत्तानीति न तत्रास्माभिश्चर्वितचर्वणं क्रियते । आचार्यचिन्तामणेर्द्वापरान्तवाद एवास्माभिरिह परीक्ष्यते ।

पाण्डवानां प्रपितामहस्य शन्तनोर्भ्रात्रा देवापिना कृतं सूक्तमेकम् ऋग्वेदसंहितायां यद् दृश्यते तल्लक्षीकृतमाचार्यचिन्तामणिना । पाण्डवानां पूर्वजस्यैव तत्सूक्तमिति बृहद्देवताग्रन्थोदाहरणेन निर्धारितं च तेन । प्रतिपाद्यशुद्धये तद्वयं पुनर्निर्धारयिष्यामः ।

निरुक्तकारो यास्कोऽत्र कथामेवं कथयति – "तत्रेतिहासम् आचक्षते । देवापिश्चार्ष्टिषेणः शन्तनुश्च कौरव्यौ भ्रातरौ बभूतवुः । स शन्तनुः कनीयानभिःषेचयाञ्चक्रे । देवापिस्तपः प्रतिपेदे । ततः शन्तनोः राज्ये द्वादशवर्षाणि देवो न ववर्ष । तमूचुर्ब्राह्मणा अधर्मस्त्वयाचरितो ज्येष्ठं भ्रातरमन्तरित्याभिषेचितं तस्मात्ते देवो न वर्षतीति । स शन्तनुर्देवापिं शिशिक्ष राज्येन तमुवाच देवापिः पुरेहितंस्तेऽसानि याजयानि च त्वेति । तस्यैतद्वर्षकामसूक्तम् ।" इति कथापात्रवोः कुलनामबन्धुत्वानां तयोरन्यतरस्य ज्येष्ठमतिलङ्घ्य सिंहासनारोहणस्य च तुल्यत्वात्तस्मिन् कुले तन्नाम्नोस्तच्चरित्रयोर्वा भ्रात्रोरन्ययोऽप्रसिद्धत्वाच्च भारतप्रसिद्धावेवैतौ देवापिशन्तनू इत्यत्र न कश्चित्संशयः ।

एतेनान्यश्चरित्रांशश्च दृढो भवति । महाभारते वृषाकपिशिपिविष्ट-नामनिर्वचनप्रस्तावे निरुक्तकारोऽयं यास्क उल्लिखितः । यास्कश्च देवापिचरित्रं पुरातनं कथयति । कृष्णद्वैपायनश्चेन्महाभारतं समग्रमकरिष्यत् तर्हि भारतचरित्रकालादतीवार्वाचीनं यास्कं कथमुदाहरिष्यत् ।

प्रकृतमनुसरामः । देवापेः सूक्ते त्रिवारं शन्तनोर्नामोल्लिखितम् । वैद्यस्तु देवापेः सूक्तमृङ्मन्त्रयुगसमाप्तिस्थं कथयति । तत्र हेतुं पृच्छामः । दशममण्डलस्थत्वं हेतुरिति चेत् । नायं हेतुः । अर्वाचामेव सूक्तानि दशमे मण्डले भवन्तीति तर्कश्चिन्त्यः । अत्यन्तं प्राचीनानां दाक्षायण्या अदितेः आदित्यस्य विवस्वतः वैवस्वतस्य यमस्य यौवनाश्वस्य मान्धातुः दाशराज्ञयुद्धनायकस्य सुदासः वैन्यस्य पृथोः तथा तत्पितुर्वेनस्य आङ्गिरसस्य बृहस्पतेः औशीनरस्य शिबेः आप्त्यस्य त्रितस्य सौम्यस्य बुधस्य, अन्येषां च सर्वसम्मतानां प्राचां सूक्तानि

दशमे मण्डल एव विद्यन्ते । तस्माद्देवापेः सूक्तं दशममण्डलस्थत्वादेव ऋङ्मन्त्रयुगसमाप्तिस्थं वक्तुमशक्यम् । भाषानवत्वं हेतुरिति चेत् देवापेः सूक्तस्य भाषाऽतीव प्राचीना । निदर्शनार्थं तस्मात्सूक्तात्कानिचित् पदानि साधुनिकप्रतिपदानि दीयन्ते । वृषाय वर्षय । आववृत्स्व प्रत्यागच्छ । द्युमतीं दीप्तिमतीम् । दिवोद्रप्सः वृष्टिः । समुद्रे अन्तरीक्षे । अमीवां रोगम् । अपसेध निवारय । अदीधेत् अन्वध्यायत् । रराणः रममाणः । शुशुचानः ज्वलन् । दुर्गहादुर्गाणि ऋङ्मन्त्रयुगमध्यस्थानाम् इवेयं भाषा ।

न केवलं देवापिः पाण्डवाश्च ऋङ्मन्त्रयुगमध्यस्था इति साधयितुं लिङ्गान्तराणि विद्यन्ते । छान्दोग्योपनिषदि पुरुषयज्ञविद्याप्रस्तावे - "तद्धैतद् घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाच" इति देवकीपुत्रः कृष्णो घोरस्याङ्गिरसस्य पुरुषयज्ञविद्याशिष्य इत्युक्तम् । देवकीपुत्रः कृष्णश्च भारतप्रसिद्धो भगवान् कृष्णः । आङ्गिरसो घोरश्च ऋङ्मन्त्रकृत्प्रसिद्धः । न केवलं घोरः तस्य पुत्रः कण्वः पौत्राः प्रस्कण्व-मेधातिथिपर्वतनारदप्रभृतयश्च ऋङ्मन्त्रकृतः प्रसिद्धाः । तत्समकालिकः श्रीकृष्णः । श्रीकृष्णसमकालिकाः पाण्डवाश्च ऋङ्मन्त्रयुगमध्यस्था इत्यनेन सिध्येत् । दुर्योधनसभां श्रीकृष्णेन सह मन्त्रकृतोः कण्वनारदयोः गमनं च तमिममर्थं द्रढयति ।

इतश्च श्रीकृष्णः पाण्डवाश्च ऋङ्मन्त्रयुगमध्यस्थाः । अनुशासन-पर्वण्युपमन्युः श्रीकृष्णस्य गुरुरुच्यते । उपमन्युश्च वसिष्ठपुत्रस्य व्याघ्रपादः पुत्र इति तत्रैव पर्वण्यभिहितम् । तावेतौ व्याघ्रपादुपमन्यू ऋङ्मन्त्रकृतौ प्रसिद्धौ । उभावपि वासिष्ठौ वदत्यनुक्रमणिकाकारः । एवं पुत्रत्वादपत्यमिति । अन्यं पौत्रत्वाद्गोत्रापत्यमिति ।

उपमन्युसमकालिकत्वात्कृष्णः कृष्णसमकालिकत्वात्पाण्डवाश्च ऋङ्मन्त्रयुगमध्यस्था इत्यनेन सिध्येत् ।

इतश्च कृष्णार्जुनौ ऋङ्मन्त्रयुगमध्यस्थौ शार्ङ्गाणां जरितृद्रोण-सारिसृक्वस्तम्बमित्राणां भ्रातॄणामार्षमाग्नेयमेकं सूक्तमृक्संहितायां दृश्यते। वनमध्यगास्ते वने समन्ततो ज्वलन्तमग्निं स्वप्राणरक्षायै प्रार्थयन्ते। स तत्र विषयः। कृष्णार्जुनयोः खाण्डववनदहने च चत्वार एतेऽग्निं स्तुत्वा रक्षिता अभूवन्निति महाभारते विद्यते कथा ।

प्रथमस्य जरितुर्जरितारिरिति नामोच्यते । कालव्यत्यासेनैतादृशो नामव्यत्यासभावः सहजः । यथा सर्वत्र निगमे यस्तुर्वश उच्यते स सर्वत्र महाभारते पुराणेषु च तुर्वसुरभिधीयते । क्रमस्तु महाभारते जरितारिस्तम्बमित्रसारिसृक्वद्रोहणा इति । सम्भाव्या एव मुखान्मुखान्तरं गच्छत्स्वितिहासेष्वीदृशाः स्वल्पव्यत्यासाः। यथा भासकविर्भरतादपि लक्ष्मणमेव ज्यायां संस्पष्टं वदति । रामायणे जन्मप्रकरणे भरतो ज्यायानुच्यते ।

आश्चर्यजननायान्यो विशेषस्तत्र महाभारतकविना योजितः । शार्ङ्गशब्दस्य पक्षिविशेषवाचकत्वमवकाशं लब्ध्वा तेन चत्वार एते ऋषयोऽजातपक्षाः पक्ष्यर्भकाः कृताः । पितरं तु कञ्चिदृषिमेवाह। अजातपक्षाणां पक्ष्यर्भकाणां तन्मातुः पक्षिण्याश्च प्रौढमनुष्यभाषया संवादः अन्ततो वह्निभयान्मातर्युड्डीनायां स्वप्राणरक्षायै तेषां वह्निस्तवश्चेति महाभारते विशेष्टो विषयः । पौराणिकशिरोमणेः सौतेः कल्पनाप्रपञ्चे नैतादृशः शिल्पविशेषो विस्मयकरः । वस्तुतस्ते शृङ्गनाम्न ऋषेर्गोत्रापत्यानि । न शार्ङ्गनामानः पक्षिणः । सर्वानुक्रमणिका-

नियमप्रकारेण सर्वत्र नाम्नामनन्तरं तत्तदृषेर्गोत्रकीर्तनमेव प्राप्तावसरं भवति । अनुक्तगोत्र आङ्गिरसो ज्ञेय इति परिभाषा । (अपत्यं पौत्रप्रभृतिगोत्रं पाणिनेः सर्वानुक्रमणिकाकारमतेन गोत्रपदं वंशमात्र-परम् । न पारिभाषिकम् । तस्मात् पुत्रोऽपि तस्य गोत्रज एव भवति ।) मधुच्छन्दो वैश्वामित्रः जेता माधुच्छन्दसः मेधातिथिः काण्व इत्यादीन्युदाहरणानि । एवं जरित्रादयश्च शार्ङ्गाः । अन्यदस्ति महाभारतकवेरीदृशाद्भुतकल्पने प्रयोजनम् । खाण्डवे केचिदृषयश्च यदि स्युरर्जुनस्य तद्वनदाहो ग्रन्थपाठकानां पापकृत्यं भासेत । अनेन कल्पनेन तन्निवारणं कृतम् ।

निगमे शार्ङ्गाणामग्निस्तुतौ द्वे द्वे ऋचावेकैकस्येवाष्टावृचः सन्ति। महाभारते नीलकण्ठख्यातपाठानुसारेण विद्यन्ते त्रयोदशश्लोकाः। प्रथमस्य द्वौ । द्वितीयस्य त्रयः । तृतीयस्य त्रयः । चतुर्थस्य पञ्च । महाभारते प्रथमस्य श्लोकावेतौ भवतः।

आत्माऽसिवायोर्ज्वलनशरीरमसि वीरुधाम् ।
योगिरापश्च ते शुक्रं योनिस्त्वमसि चाम्भसः ।।
ऊर्ध्वं चाधश्च सर्पन्ति पृष्ठतः पार्श्वतस्तथा ।
अर्चिषस्ते महावीर्यरश्मयः सवितुर्यथा ।।

आदिपर्व २३१-७, ८

निगमे तु प्रथमस्य ऋचावेते-

अयमग्ने जरिता त्वे अभूदपि
सहसः सूनो न ह्यन्यदस्त्याप्यम् ।
भद्रं हि शर्म त्रिवरूथमस्ति त
आरे हिंसानामप दिद्युमा कृधि ।।

प्रवत्ते अग्ने जनिमा पितूयतः
साचीव विश्वा भुवना न्यृञ्जसे ।
प्र सप्तयः प्र सनिषन्त नो धियः
पुरश्चरन्ति पशुपा इवात्मना ।।
(ऋक्संहिता १०. १४२. १-२ जरिता)

सहसः सूनो बलस्य पुत्रः । बलं च वायव्यमिति आत्माऽसि वायोरित्युक्तम् । न ह्यन्यदस्त्याप्यम् । त्वदिति शेषः। आप्यमम्मयम् । अन्यन्नास्ति। अस्य विवरणम् "यो निरापश्चते शुक्रं योनिस्त्वमसि चाम्भसः" इति । आप्यं प्राप्तव्यमित्यर्थोऽपि भवति । तथाऽपि अम्मयमित्यर्थं कृत्वैव महाभारतकविर्भारतकविर्वा स्वस्तुतिं निगमार्थानुसारिणीं कृतवान् । शरीरमपि वीरुधामिति पादश्चास्यैवोप-व्याख्यानं भवति । अन्यदधिकं मन्त्रे प्रथमे । तृतीयपादे अग्नेः रक्षकत्वसामर्थ्यं चतुर्थे रक्षाप्रार्थना चाभिधीयेते । तत्र प्रार्थनाऽस्माभिर्लक्षीकर्तव्या। हिंसानां हिंसकानां शत्रूणाम् । दिद्युमायुधं जातावेकवचनम् । आरे दूरे । अपाकृधि अपगतं कुरु । न केवलमग्निभयम् । शात्रवायुधपातभयं चानेन व्यज्यते ।

द्वितीये मन्त्रे "साचीव विश्वा भुवनान्यृञ्जसे" इति पादः प्राधान्येन महाभारते द्वितीयश्लोके व्याख्यातः । साचीव सचमान इव सचनं सहयोगः । विश्वा भुवनानि भूमिमन्तरालं दिवं न्यृञ्जसे आक्रामसीत्यतिशयोक्तिः । प्रप्रकृष्टाः । सप्तयः किरणाः । सूर्याश्वाः सप्तय उच्यन्ते । सूर्याश्वाश्च सूर्यकिरणेभ्यो नातिरिच्यन्ते अत्र सूर्यकिरणानामग्निज्वालानां च व्याप्तिसाधर्म्यादभेदेनाभिधानम् । प्रप्रकर्षेण सनिषन्त साधयन्ति । सर्वतो गच्छन्तः स्वकीयं दहनकार्यं

निर्वर्तयन्तीत्यर्थः । इममर्थं मनसि निधायैव रश्मयः सवितूर्यथेति महाभारतकविर्भारतकविर्वा वदति । अस्यामृचि प्रथमपादार्थः महाभारतकवेः कस्यचित् कथांशस्य कल्पनाय बीजमासीत् । हे अग्ने । पितूयतः अन्नमिच्छतः । ते जनिमा प्रादुर्भावलक्षणं जन्म । प्रवत् अत्तव्यप्रवणं भवति । अत्र पितूयत इति पदलिङ्गेनाग्नेः खाण्डववन-भक्षणाभिलाषस्तद्विषयेऽर्जुनसाहाय्यकप्रार्थनं चाकल्पिषातां महाभारत-कविना । वस्तुतः पितूयत इत्यालङ्कारिकभाषा । द्वितीयस्य स्तुतो निगममहाभारतयोः सादृश्यमल्पमपि लक्षीकर्तव्यम् । तत्र प्रथममन्त्रे - "मा ते हेतिं तविषीं चुक्रुधाम" (ऋक्संहिता १०. १४२. ३, द्रोणः) । (हे अग्ने) ते तविषीं भयङ्करीम् । हेतिं ज्वालारूपमायुधम् । माचुक्रुधाम व्यतिरेकशान्तीकुर्म इति तात्पर्यम् ।

यदग्ने ते शिवं रूपं ये च ते सप्तहेतयः ।
तेन नः परिपाहि त्वमार्तान्नः शरणैषिणः ॥

(आदिपर्व २३१. १०)

इति द्वितीयस्य स्तुतिश्लोके हेतय उक्ताः । तदिदं हेति शब्दसादृश्यं स्तवयोरुभयोः ।

तृतीयस्य स्तवे निगमे "आत्वाऽद्य विश्वे वसवः सदन्तु" (ऋक्संहिता १०. १४२. ६, सारिसृक्वः) इत्युपसंहारो भवति ।

त्वा अतीव भयङ्करतया वर्धमानं त्वाम् । अद्य सम्प्रति विश्वे सर्वे। वसवः देवाः । आसवन्तु आविशन्त्वित्यर्थः । तव सर्वदेवात्मकं स्वरूपमेव व्यक्तं भवत्यस्मिन्वर्धमानरूपे न दाहकत्वगुणविशिष्टमुग्रं स्वरूपमिति तात्पर्यम् । महाभारते तु तृतीयस्य स्तवोऽग्नेः

सर्वदेवतात्मकत्वप्रतिपादकः तदिदमत्र साद्दश्यम् ।

महाभारते चतुर्थस्य स्तवे येऽन्त्याः त्रयः श्लोकास्ते निगमस्तवेन नितान्तं तुल्याः । महाभारते यथा -

त्वत्त एता पुनः शुक्रवीरूधो हरितच्छदाः ।
जायन्ते पुष्करिण्यश्च समुद्रश्च महोदधिः ।।
इदं वै सद्म तिग्माशो वरुणस्य परायणम् ।
शिवस्ताता भवास्माकं माऽस्मानद्य विनाशय ।।
पिङ्गाक्षलोहितग्रीवकृष्णवर्त्मन् हुताशन ।
परेण प्रेहि मुञ्चास्मांत्सागरस्य गृहानि च ।।

(आदिपर्व २३१. १७-१९)

निगमे यथा -

अपामिदं न्ययनं समुद्रस्य निवेशनम् ।
अन्यं कृणुष्वेतः पन्थां तेन याहि वशाँ अनु ।।
आयने ते परायणे दूर्वा रोहन्तु पुष्पिणीः ।
ह्रदाश्च पुण्डरीकाणि समुद्रस्य गृहा इति ।।

(ऋक्संहिता १०. १४२. ७-८ स्तम्बमित्रः)

एवं नामसाद्दश्यात्सन्दर्भसाद्दश्यात्स्तवसाद्दश्याच्च मन्त्रकृतः शार्ङ्गा एव भारतोक्ताः शार्ङ्गा इति सिध्यति । तस्माद्दङ्मन्त्रकृतां काले पाण्डवा आसन्निति सिध्येत् । कृष्णसहायस्यार्जुनस्य खाण्डववनदहनकारकत्वं हि प्रसिद्धम् ।

इतश्च पाण्डवा ऋङ्मन्त्रयुगस्थाः । पाण्डवानां पुरोहितो धौम्यो यत्सुप्रसिद्धस्य मन्त्रकृतो देवलस्य भ्रातोच्यते ।

यवीयान्देवलस्यैष वने भ्राता तपस्यति ।
धौम्य उत्कोचके तीर्थे तं वृणुध्वं यदीच्छथः ।। इति

इतश्च पाण्डवानां कालोऽतीव पुरातनः ।
गुरोर्वचनमाज्ञाय स तु विप्रर्षभस्तदा ।
आचचक्षे ततः सर्वमितिहासं पुरातनम् ।।
(आदिपर्व - ६०. २३)
श्रव्याणामुत्तमं पुराणमृषिसंस्तुतम् ।
(आदिपर्व - ६२. १६)

इति महाभारतवचनयोरेकत्र हि भारतचरित्रं पुरातन इतिहास उच्यते । अन्यत्र पुराणम् ।

इतश्च पाण्डवा ऋङ्मन्त्रयुगस्थाः । यदनुशासनपर्वणि कृष्णवंशावली-प्रस्तावे (१४७) श्रीकृष्णो यदोः सप्तमः पुरुष उच्यते । कूटस्थादारभ्य गणनायां न केवलं यदुः यदोर्वंश्याश्च पुरातनैर्मन्त्रकृद्भिरुल्लिख्यन्ते । "नि तुर्वशं नि याद्वं शिशीहि ।" (ऋक्संहिता ७. १९. ८ वसिष्ठः), "श्रवसा याद्वं जनम् ।" (ऋक्संहिता ८. ६. ४८ वत्सः), "यदिन्द्राग्नी यदुषु तुर्वशेषु यद्द्रुह्युष्वनुषु पूरुषु स्थः ।" (ऋक्संहिता १. १०८. ८ कुत्सः) इत्यादौ । यदोः कृष्णस्य च मध्ये पञ्चपुरुष एव गताः। प्राञ्चश्चोदाहरन्ति यदुवंश्यान् । तस्मात् श्रीकृष्णं तत्समकालिकान् पाण्डवांश्च ऋङ्मन्त्रयुगादर्वाचीनान्वक्तुं प्रयत्नो बलवत्प्रमाणविरोधी । अन्यत्परिशोध्य प्रकटितमाचार्यचिन्तामणिना । मेगस्तनीसनामको यवनपण्डितश्चन्द्रगुप्तस्य काले प्रसिद्धं पुरातनराजवंशावलीं तेषां कालमधिकृत्य स्वकीये ग्रन्थे किल लिखितवान् । यद्यपि स ग्रन्थः

सम्प्रति नोपलभ्यते तथाऽपि तद्ग्रन्थादरायनो नाम पण्डितो यदुद्धृत्य प्रकाशितवान् तदधुनोपलभ्यते । तत्रैवं किल लिखितम् ।

> दक्षात्प्रभृति चन्द्रगुप्तपर्यन्तं १५३ राजानः । तेषां राज्यकालमानं ६०४२ वर्षाणि भवन्ति । परन्तु तन्मध्ये त्रिवारं लोकसत्तात्मकं राज्यमासीत् । एकदा १ वर्षम् । एकदा ३०० वर्षाणि । एकदा १२० वर्षाणि च । अपि च दक्षात् कृष्णः पञ्चदशः पुरुषः । एवं भारतीयाः प्रवदन्ति ।"

अनुशासनपर्वोक्तं, विश्वसनीयप्राचीनविदेशीयपण्डितज्ञातं तत्कालभारतीयपण्डितमतं च समरसे भवतः । तस्मादेष विषयः सुतरां विश्वसनीयः। अनुशासनपर्वोक्ता वंशावली नीचैर्दीयते।

१. दक्षाददितिः।
२. अदितेर्विवस्वान्।
३. विवस्वतो मनुः।
४. मनोरिला।
५. इलायाः पुरुरवाः।
६. पुरुरवस आयुः।
७. आयुषो नहुषः।
८. नहुषाद्ययातिः।
९. ययातेर्यदुः।
१०. यदोः क्रोष्टाः।
११. क्रोष्टुर्वृजिनीवान्।
१२. वृजिनीवत उषङ्गुः।
१३. उषङ्गोः शूरः।
१४. शूराद्वसुदेवः।
१५. वसुदेवात् कृष्णः।

इयं कूटस्थं विहाय गणना यथा वैद्यमतम् । पञ्चम्यर्थमाद्यावधिं मर्यादां कुर्मश्चेदीदृशी गणना सिध्येत् । अभिव्याप्य गणयाम चेत् कूटस्थस्य न विसर्जनम् । राजप्रकरणात् दक्षात्पञ्चदशो राजा कृष्ण इति च वक्तुं शक्यते। पक्षे तस्मिन्नदितेः पालकत्वाभावात् दक्षात् पञ्चदशो राजा कृष्णः । आद्यमभिव्याप्यैवात्र गणनम् । हरिवंशोक्तवंशावल्यां कूटस्थेन

सहैव गणने दक्षात् कृष्णः पञ्चदशो भवति। एवं सङ्गतिरस्ति सामरस्यकरणाय। हरिवंशोक्तवंशावल्यां वृजीनीवदुषङ्गोः स्थानं देवमीढुष एकः कथितः । अन्यत्समानम् ।

प्रकृतमनुसरामः । आचार्यवैद्यः कृष्णाच्चन्द्रगुप्तपर्यन्तानां १३७ राज्ञामेकैकस्य विंशतिवर्षाणीति विधया स्वकीयकलियुगारम्भकालाय कृष्णमानयते । तत्रैकं विस्मृतं तत्र भवता । एकैकस्य विंशतिवर्षाणीति विधया यः कालः प्राप्तस्तेन लोकसत्तात्मकराज्यवर्षाणि ४२१ योजयितव्यानि। तदा कलियुगारम्भात् सपादचतुश्शतवर्षतः प्रागेव कृष्णस्य कालः प्रसज्यते तदा निजो वादः पतितः स्यात् । तदास्ताम् ।

यवनपण्डितोक्तदिशा दक्षकालोऽस्माभिर्ज्ञातः । चन्द्रगुप्ताद्दक्षः ६०४२वर्षमिते काले बभूवेति । एवं च दक्षस्य काल ईशपुत्रशकात्पूर्वं ६३६२वर्षमितो भवति । चन्द्रगुप्तो हि ईशपूर्वं ३२०वर्षमिते काले बभूव । दाक्षायण्या अदितेः, आदित्यस्य विवस्वतः वैवस्वतस्य मनोः ऐलस्य पुरूरवसः, आयुषष्य नहुषस्य नहुषस्य ययातेश्च मन्त्रदर्शनानि ऋग्वेदसंहितायां दृश्यन्ते । ऋङ्मन्त्रयुगादिस्थास्ते । अथ पाण्डवानां कालो ज्ञातव्यः । सामन्यतो ज्ञातमृङ्मन्त्रयुगस्था इति । तेन न तृप्तिं गच्छेयुश्शोधकाः । विशेषं ते जिज्ञासन्ते । अत्रेदं ब्रूमः । ऋङ्मन्त्रयुग-मध्यस्थाः पाण्डवाः । तत्कालविशेषज्ञानायेमे ऋचौ भवतः ।

अमी ये पञ्चोक्षणो मध्ये तस्थुर्महो दिवः ।
देवत्रा नु प्रवाच्यं सध्रीचीना नि वावृर्वित्तं मे अस्य रोदसी ।।
सुपर्णा एत आसते मध्य आरोधने दिवः ।
ते सेधन्ति पथो वृकं तरन्तं यह्वतीरपो
वित्तं मे अस्य रोदसी ।।(ऋक्संहिता १. १०५. १०-११ कुत्सः)

अमी । ये पञ्च । उक्षणः सेचकाः नक्षत्रात्मकवृषाभाः सेचकत्वं च वृष्टिहेतुत्वात् । महः महत्याः । दिवः आकाशस्य । मध्ये । तस्थुः तिष्ठन्ति वर्तमानार्थे लिट् छन्दसि सर्वार्थकत्वात् भूतार्थकलकाराणाम् । सध्रीचीनाः सहाञ्चन्तस्ते । देवत्रा देवयाने मार्गे प्रवाच्यं परमकाष्ठागतत्वात्प्रशंसनीयमादित्यम् । उत्तरायणान्तसूर्यमित्यर्थः । निववृतुः निवर्तयन्ति मार्गात् वर्तमानार्थे लिट् । अस्य इमं कूपे पतितं माम् द्वितीयार्थे षष्ठी । रोदसी हे द्यावापृथिव्यौ । वित्तं जानीतम् । दक्षिणायनस्य गमनात् वृष्टिर्भवेत् । तदा कूपपतितस्य विपत्प्रसज्येत । तां निवारयतमित्यर्थः । देवत्रेत्यस्य देवयानमार्गार्थकत्वे प्रयोगान्तरं पश्यत ।

उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् ।
देवं देवत्रा सूर्यगमन्म ज्योतिरुत्तमम् ।।

(ऋक्संहिता १. ५०. १०, प्रस्कण्वः)

देवत्रा देवयानमार्गे । उत्तरं उत्तरदिग्गतं ज्योतिः । सूर्यम् । पश्यन्त इति योजना ।

अनन्तरायामृचि "आरोहन्नुत्तरां दिवम्" (ऋक्संहिता १. ५०. ११) इत्येतमेवार्थं पुनरनुवदति। कुत्सस्य काले कस्यचित् पञ्चतारस्य नक्षत्रस्य सूर्ययोगे दक्षिणायननिष्पत्तिरित्यनेन वार्यते।

अथ द्वितीयमन्त्रार्थः । दिवः । मध्ये । आरोधने नक्षत्रधारके प्रदेशे । क्रान्तिवृत्त इत्यर्थः । एते प्रागुक्ताः पञ्च । सुपर्णाः नक्षत्रात्मकगरुडाः । नक्षत्राणां वृषभत्वेन गरुडत्वेन च निगीर्याध्यवसानम् आलङ्कारिकम् । आसते तिष्ठन्ति । ते सह्वतीः महतीः । अपः आकाशम् । तरन्तम् । वृकं सर्वस्यातारं उत्तरायणसूर्यम् । पथः मार्गात् । सेधन्ति निषेधन्ति निवारयन्तीत्यर्थः । तचुर्थ पादार्थः प्राग्वत् । पूर्वमन्त्र एवात्र

भङ्ग्यन्तरेणोक्तः । वृकशब्दं यास्कः सूर्ववाचकत्वेनापि निर्वक्ति । मन्त्रद्वयस्य सायणीयार्थो न विमर्शसह इत्युपेक्षितः ।

हस्तर्क्षं पञ्चतारं प्रसिद्धम् । तदेवात्र पञ्चोक्षणः सुपर्णा इति पदाभ्यामुच्यते । एतत्समर्थयितुं लिङ्गे च द्वे भवतः । दक्षिणायनं कृष्णःपक्षश्च पित्र्यावित्यत्र न कश्चित्संशयः । एवं स्थिते दक्षिणायने यः प्रथमोपस्थितः पक्षः स एव कर्मसु पितृपक्षो वक्तुं योग्यः । सम्प्रति भाद्रपदकृष्णपक्षः पितृपक्ष उच्यते । स आर्याणां पुरातने काले दक्षिणायने प्रथमोपस्थितः। कृष्णपक्ष इत्यनेनोहितुं शक्यते । अयं च कालसमावेशो हस्तर्क्षे दक्षिणायनप्रवेश एव । उपपन्नतरो भवेत् । अथान्यल्लिङ्गम् । हस्तारम्भे दक्षिणायने प्रवेशश्चेदार्द्राद्वितीयपादे वसन्त सम्पातः स्यात् । यत्र वसन्तसम्पातः तत्प्रथमं नक्षत्रं वदन्ति । यथा कृत्तिकां मध्यकाले यथा चाश्विनीमर्वाचीनकाले । एवं स्थितेऽद्याप्युत्तरदेशप्रसिद्धेऽष्टोत्तरी-नामकदशाविशेषे भवत्यार्द्रानक्षत्रमारम्भकम् । यथा विंशोत्तरीनामके कृत्तिका एतदनुमापकं प्राचामार्याणां कदाचित्प्रसिद्धे काले प्रथमं नक्षत्रमगण्यतार्द्रेति विषये । स चोदाहृतऋङ्मन्त्रप्रोक्तकाल इति ब्रूमः । एतल्लिङ्गद्वयं हस्तर्क्षे सूर्ये दक्षिणायनमभूत् प्रसिद्धे कदाचित्प्राचां काल इत्येव बोधयताम् । तथापि तादृशप्रसिद्धकालस्योदाहृतात्कालादन्यत्वं दुर्वचम् । उदाहृतः काल एव प्रायो महर्षीणां विज्ञानविकासकालः । एतत्क्रमशः पाठकानां स्पष्टं भवेत् ।

ननु प्राचां काले वसन्तसम्पात एवोत्तरायणारम्भः । शरत्सम्पात एव दक्षिणायनारम्भः । न सूर्यस्तेजस्ततो मार्गनिवृत्ताविति चेत् । नैतच्चोद्यम् । उत्तरायणं नामोत्तरां दिशं प्रति गतिः नोत्तरदिशि स्थितिः। दक्षिणायनं नाम दक्षिणां दिशं प्रति गतिः । न दक्षिणदिशि स्थितिः। भवतु नाम

प्राचां व्यवहारे उत्तरः प्रदेशो देवयानाध्वा दक्षिणश्च पितृयाणः । तथाप्ययनविषये नास्ति प्राचां नव्यानां च मतभेदः। मन्त्रयोर्मार्गतो निवर्तनमेवोच्यते नातिक्रमणम् । तस्मान्नास्ति विरोधः ।

हस्तर्क्षे सूर्ये स्थिते कुत्सस्य काले दक्षिणायननिष्पत्तिरिति स्थितम् । यः श्रीकृष्णस्य गुरुर्घोरः तस्य पुत्रं कण्वम् -

याभिः कण्वं प्र सिषासन्तमावतम् ।

(ऋक्संहिता १. ११२. ५ कुत्सः)

इति कुत्स उदाहरति । कण्वपुत्रौमेधातिथिमेध्यातिभी -

"वहत् कुत्समार्जुनेयं शतक्रतुः"

(ऋक्संहिता ८. १. ११ मेधातिथिमेध्यातिथी)

इति कुत्समुदाहरतः । तस्मात्कुत्सः कण्वसमकालिक इति श्रीकृष्णसमकालिकश्च भवति । तत् कुत्सस्य मन्त्राभ्यां यः कालो ज्ञातः स श्रीकृष्णस्येति वक्तुं शक्यते । उत्तरत्र कुत्सस्य प्रत्यक्षं भारतकथासम्बन्धं निरूपयिष्यामः ।एतावदलं प्रकृते भारतचरित्रकाल-निरूपणायोदाहरणम् ।

एतं च कालनिर्णयं प्रमाणान्तरेण स्थिरीकुर्मः ।प्रतिपाद्यशुद्धये ।अस्त्यन्यः कालनिर्णयकः शिलालेखः प्रथमे मण्डले ।

सुषुप्वांस ऋभवस्तदपृच्छत

अगोह्य क इदं नो अबूबुधत् ।

श्वानं बस्तो बोधयितारमब्रवीत्

संवत्सर इदमद्या व्यख्यत ।।

(ऋक्संहिता १. १६१. १३ दीर्घतमाः)

सुषुष्वासः निद्रिताः हेमन्तशिशिरयोर्मन्दप्रतापत्वेन निद्रिता इव स्थिताः । ऋभवः रश्म्यात्मकाः । तत् । अपृच्छत । सूर्यमिति शेषः प्रकरणात् । अप्रश्नस्वरूपमुच्यते । अगोह्य हे अगोपनीय । नः इदं ज्योतिः । कः । अबूबुधत् बोधयेत् । लिङर्थे लुङ । बस्त मेषः सूर्य एवात्र मेषत्वेन रूपकातिशयेनोच्यते । श्वानम् । बोधयितारम् । अब्रवीत् । अद्या संवत्सरे संवत्सरे पूर्णे । इदं जगत् । व्यख्यत प्रकाशयत । ऋभव इति सम्बुद्धेऽनुवृत्तिः । मान्द्यापगमेन जगतः प्रकाशनं सूर्यकिरणानामुपपन्नं वसन्ते । अत्र श्वा आर्द्रानक्षत्रनिकटवर्तिव्याधनक्षत्रम् । आर्द्रापुनर्वसु-नक्षत्रयोर्मध्ये तस्य स्थितिः । तस्य कॉंनिसमेजरसंज्ञा पाश्चात्य-भाषायाम् । क्वान् संज्ञा यवनभाषायाम् । क्वान् शब्दः श्वन् शब्द-भवः । तस्मात्तदेव नक्षत्रं श्वेतिमन्त्रे कथितमिति तर्कः सरसुः । दशमे मण्डले पितृमेधेयो यमस्य श्वानौ कथितौ तयोरयं प्रथमः । अन्यः पुनर्वसुनक्षत्रव्यूहे विद्यते । तस्य कॉंनिसमैनरसंज्ञा पाश्चात्य-भाषायाम् प्रोक्वान् संज्ञा यवनभाषायाम् । प्रोक्वान् शब्दः परश्वन् शब्दभवः ।

मृगव्याधं रुद्रं चाभिन्नौ स्पष्टं वदत्यैतरेयब्राह्मणम् । तस्मात्प्राचां काले व्याधनक्षत्रमेव रुद्रदेवताकार्द्रानक्षत्रमगण्यतेति चानुमातुं शक्यते । व्याधार्द्रानक्षत्रयोर्भेदपक्षे वा श्वा आर्द्रान्तिकस्थ एव भवति न मृगशीर्षान्तिकस्थः ।

केचिदेतामृचमेवं व्याचक्षते -

सुषुष्वांसः सौरवर्षाच्चान्द्रवर्षस्य द्वादशदिनोनत्वात् तेषु दिनेषु कार्याभावान्निद्रिताः । ऋभवः ऋतवः । तदपृच्छत सूर्यम् । अगोह्यक

इदं नो अबूबुधत्पुनः क्रियादानेनेति । बस्तः मेषः (सूर्यः) श्वानं श्वाकृतिं नक्षत्रव्यूहं । बोधयितारमब्रवीत् । अद्या संवत्सरे पूर्णे इदं जगद्व्यख्यत प्रकाशयतेति । अस्मिन्पक्षे बह्व्यो विप्रतिपत्तयो भवन्ति । भवतु नाम सौरचान्द्रमानयोर्द्वादशदिनव्यत्यासः तथापि न कस्मिंश्चित्संवत्सरे द्वादशदिनानि ऋतुषट्काद्बहिः क्रियन्ते । मानद्वयसामरस्यायाधिकमासः क्रियते यदि मन्त्रे ऋतूनां विश्रान्तिरेव सुषुष्वांस इति पदेन विवक्षिता तर्हि अधिकमास एव तत्रोपस्थितस्यान्न दिनद्वादशकं संवत्सरान्तस्थम्। संवत्सरान्तस्थस्य दिनद्वादशकस्य शिशिरान्तर्गतत्वमेव दृश्यते । इयं चान्द्रमानेन मासद्वयमृतुरिति पक्षे विप्रतिपत्तिः । सौरमासद्वयेन ऋतुग्रहणे न कदाचिद्विश्रान्तिः । अपि च ऋतवः एकैको मासद्वयं पृथक् कर्म कुर्वन्ति । तदा एकैकस्य ऋतोः दश दश मासाः विश्रान्तिकालो मिलेत् । नास्ति सर्वेषां विश्रान्तिरेकदा । न वा सर्वेषामेकदा प्रबोधः । भवतां समन्वये सर्वेषां द्वादशदिनानि विश्रान्तिः । वसन्त सम्पाते सर्वेषां पुनः प्रबोधः । कथमेतदुपपद्यते । वसन्तसम्पाते वसन्त एक एव प्रबुद्धो भवेत् । न षड़ृतवः । तस्माद्रश्मय एवात्र ऋभवः न ऋतवः।

प्रकृतमनुसरामः । यदा हस्तगते सूर्ये दक्षिणायनं तदानीमार्द्रागते वसन्तसम्पात इति कौत्सदैर्घतमसयोर्दर्शनयोः सामरस्यम् । दीर्घतमाश्च कक्षीवतः पिता । कक्षीवान्कुत्सश्च समकालिकौ । "कुत्साय यत्र पुरुहूत वन्वन्" (ऋक्संहिता १. १२१. ९ कक्षीवान्) । "कक्षीवन्तं स्तोतारं याभिरावतम्" (ऋक्संहिता १. ११२. ११ कुत्सः) । इति कुत्सः कक्षीवन्तम् उदाहरति । तस्मात्कुत्सो दीर्घतमसः किञ्चिदेवार्वाचीन इति तद्दर्शनयोः सूचितः कालः परस्परं समस्तश्चेद्युक्तं तत् ।

ननु प्राचां संवत्सरारम्भो न वसन्ते । अपितु शरदि ।"शतं जीव शरदो

वर्धमानः शतं हेमन्ताञ्छतमु वसन्तान् ।" (ऋक्संहिता १०. १६१. ४) । इति मन्त्रे शरदादिऋतुक्रमाभिधानमत्र लिङ्गमिति चेत् । अस्मिन्पक्षेऽपि नास्माकं क्षतिः । तस्मिन् प्रसिद्धे प्राचां काले मार्गशीर्षे शरत्सम्पातोऽभूदिति ब्रूमः । भाद्रपदे दक्षिणायन प्रवेशे मार्गशीर्षे शरत्सम्पातीत्यत्र न कस्यापि विवादः । ननु ते तस्मिन् प्रसिद्धे काले मार्गशीर्षे शरत्सम्पातोऽभूदित्यत्र किं गमकमिति चेत्। मार्गशीर्षस्याग्रहायणिकत्वप्रसिद्धिरेवात्र लिङ्गम्। अग्रे हायनस्य भवं नक्षत्रम् आग्रहायणम् । हायनाग्रं नाम हायनसमाप्तिदिनम् । वृक्षाग्रम् इत्यादाविवाग्रशब्दस्यार्थः । तच्चाग्रहायणं नक्षत्रं मृगशीर्षं भवति । आग्रहायणेन युक्ता पौर्णमास्याग्रहायणी । आग्रहायण्यस्याम् इत्याग्रहायणिकः । संवत्सरसमापकनक्षत्रयुक्तपूर्णिमावान् मास इत्यर्थः । एतेन प्राचां प्रसिद्धे काले मार्गशीर्षे मास्यार्द्रायां संवत्सराम्भ इति व्यज्यते । केचिद् आग्रहायनपदस्य मूलमाग्रायणपदं वदन्ति । अग्रे अयनस्य भवमाग्रायणम् । आग्रायणमेव दीर्घस्य ह्रस्वत्वविकारात् आग्रयणम् इति व्युत्पत्तिः । तस्मिन् पक्षेऽपि नास्माकं हानिः । तदानीमयनशब्दं संवत्सरपरं कुर्मः ।

ननु शरत्ससम्पातस्य संवत्सरारम्भकत्वं मार्गशीर्षमासस्थार्द्रायाः संवत्सराम्भकत्वविरोधीति चेत् । न । पञ्चसंवत्सरात्मकयुगारम्भे प्राचीनस्थूलगणितप्रकारेण द्वयोः सामरस्यात् । अन्यदा शरत्सम्पातः सौरसंवत्सरारम्भकः आर्द्रा चान्द्रसंवत्सरारम्भिकेति सङ्गतिः । अस्मिन् पक्षे ब्राह्मणकालमारभ्य वसन्तः संवत्सरारम्भकोऽभूदिति समाधानम् ।

नन्वस्मिन् पक्षे तव सुषुप्वांस इति मन्त्रो विरोधीति चेत् । न । तदा तस्यार्थमन्यथा कुर्मः ।

"निद्रिताः वर्षाकले जलदाच्छादनवशात् निद्रिता इव स्थिताः । ऋभवः हे रश्मयः । तदपृच्छत सूर्यम् । अगोह्यक इदं नो अबूबुधदिति । वस्तः श्वानं वायुं कालं वा बोधयितारमब्रवीत् । संवत्सर इदमद्य व्यख्यतेति । प्रावृडन्तमेधानपोह्य युष्मान् बोधयतीति वायुपक्षे । मातरिश्वन एकदेशग्रहणं श्वेति । कालपक्षेऽर्थसङ्गतिर्व्यक्ता । सर्वान् वनस्पतीन् स्वादन् मेषश्चरति । सर्वान् वनस्पतीन्विशोषयंत्सूर्यः । तन्मेषसूर्ययोः सादृश्यम् । प्राणिनः स्वादन् श्वा (अरण्यश्वा) चरति । प्राणिनः स्वादन् कालः । तच्छ्वकालयोः सादृश्यम् । एवं संवत्सरस्य शरदारम्भत्वपक्षेऽपि नास्माकं कालनिरूपणे प्रतिबन्धः ।"

प्रकृतमनुसरामः । किं प्राचां नक्षत्राणि समविभक्तप्रदेशपराणि यथैकैकस्य नक्षत्रस्य त्रयोदशांशाः विंशतिः कला इति । उताहो दृङ्मात्रज्ञानानि तारात्मकानि । तारात्मकान्येवेत्याह । प्राचां नाक्षत्रगणितज्ञानस्यासम्भवात् । नैष साधुस्तर्कः । वेदाङ्गज्योतिषे सार्पार्धे दक्षिणायनं प्रोच्यते । नाक्षत्रगणितानां विना कथमर्धविभागोपपत्तिः । सर्वेषु ब्राह्मणेषु नक्षत्रेष्वाचरणीयानि कर्माणि विधीयन्ते । तत्र नक्षत्रयशब्देन नाक्षत्रं दिनमेकैकं गम्यते । नाक्षत्रगणितज्ञानं विना कथं नाक्षत्रदिनज्ञानम् । ऋक्संहितायामपि – "अघासु हन्यन्ते गावः" (ऋक्संहिता १०. ८५. १३) इत्यादौ नाक्षत्रदिनोल्लेखो दृश्यते । नक्षत्रगणितज्ञानं विना दिनस्य नक्षत्रवाचकपदेन व्यवहार एव नोपपद्यते । तस्मात् प्राचामपि नक्षत्राणि समविभक्तप्रदेशपराणीति वक्तव्यम् । तत्तत्प्रदेशान्तर्गतत्वात् तत्तन्नक्षत्रस्य तत्तन्नक्षत्रशब्दैस्तत्प्रदेशस्य व्यवहार उपपद्यते ।

कविष्ठरीत्या हस्तादौ दक्षिणायनप्रवेशश्चेत् आर्द्राद्वितीयपादे वसन्तपातो

भवेत् । अश्विन्यादीनां पञ्चानामृक्षाणामाप्रथमपादस्य च मिलित्वांशाः सप्ततिः (७०) साम्प्रतिकाः (१९३५) अयनांशाः किञ्चिदूनाः त्रयोविंशतिः । एवं साम्प्रतिकात्कालात्कुत्सकालः ६६९६ वर्षाणीति स्थूलगणितेन सिध्यति । ईशपुत्रशकात्पूर्वं ४७६१ वर्षाणि भवन्ति । चन्द्रगुप्तात्पूर्वं ४४४१ वर्षाणि भवेयुः। इतोऽप्यर्वाचीनं कालं प्रति भारतचरित्रकालो नेतुमशक्यः ।

चन्द्रगुप्तात् पूर्वेषु लोकसत्तात्मकराज्यवर्षाणि यदि तष्टानि कुर्मः तर्हि ४०२० वर्षाणि शेषाणि भवेयुः । तावन्ति वर्षाणि १३७ पुरुषाणां लब्धानि । एवैकस्य किञ्चिदूनानि त्रिंशद्वर्षाणि लब्धानि । चन्द्रगुप्तसन्निकृष्टकाले एतावतां वर्षाणां एकैकस्य पुरुषस्य किञ्चित् अधिकत्वेऽपि ऋङ्मन्त्रयुगकालशेषे यजुर्ब्राह्मणाथर्ववेदोपनिषदां च काले पुरुषाणां दीर्घायुष्ट्वात् तेषां विवाहकालस्य च त्रिंशद्वर्ष-समाप्तेरनन्तरमेव सम्भाव्यत्वाद्विवाहादनन्तरमप्यलौकिक-शक्तिसम्पादकप्रतार्थं ब्रह्मचर्यसम्भवाच्च तावन्ति वर्षाणि न्यूनान्येव भवेयुः । तस्मान्न काचिदनुपपत्तिः ।

चतुर्थ प्रकरणम्

## व्यासवैशम्पायनयोः कालविचारः

### व्यासकालविचारः

भारतकथाकालऋङ्मन्त्रयुगमध्यस्थ इति निरूपितम् । भूयश्च निरूपयिष्यामश्चरित्रविचारसन्दर्भे । अस्मिन् प्रकरणे यथाप्रतिज्ञं जयेतिहासकृतो व्यासस्य कालो विचार्यते ।

ऋग्यजुःसामाथर्वाणां वेदानामविभक्तानां विभागकृद् वेदव्यासः कृष्णद्वैपायन इति महाभारते पुराणेषु च कथ्यते । मन्त्रात्मक-वेदानामित्येकः पक्षः । स ब्राह्मणानामित्यपरः । आद्ये पक्षे सर्ववेदमन्त्रप्रादुर्भावादनन्तरो व्यासस्य कालः । द्वितीये पक्षे ततोऽप्यर्वाचीनः, भवतु प्रथम एव पक्षः । तथाऽपि व्यासो न पाण्डवसमकालिकः । पाण्डवा ऋङ्मन्त्रयुगमध्यस्थाः । व्यासोऽथर्व-वेदरचनादप्यनन्तरः । कथं तेषामेष समकालिकः स्यात् । भाषा-शोधनेऽपि सोऽयमंशः सिद्धो भवति । ऋङ्मन्त्रभाषा सामान्यतः संस्कृतभाषाऽभिज्ञेन भेत्तुमशक्या । अधुनातनात्संस्कृतादतीव विलक्षणा । भारतभाषासर्वाऽपि सुबोधा भवति सामान्यतो व्युत्पन्नानाम् । अधुनातनस्य संस्कृमस्यातीवसन्निकृष्टा । एवं स्थिते कथं भारतकारो मन्त्रकृत्समकालिको वक्तुं शक्यः । छन्दोविचितिशोधनेऽपि सोऽयमंशः सिद्धो भवति । भारते प्रायेण दृष्टान्यनुष्टुभानि वृत्तानि सर्वथा

ऋगनुष्टुब्विलक्षणानि । प्रायः पथ्यावक्त्रश्लोकलक्षणं भारतानुष्टुप्सु दृश्यते । समविषमपादयोर्व्यत्यासस्तत्र नियतः । ऋगनुष्टुप्सु न कश्चिदस्ति नियमः । वैदिकानि गायत्रौष्णिहबार्हतपाङ्क्तानि वृत्तानि न सन्त्येव भारते । त्रैष्टुभानि तु भारतवृत्तानि यद्यप्यधुनातनवाङ्मयत्रैष्टुभवृत्तेभ्यो विलक्षणानि भवन्ति तथापि ऋक्संहितात्रैष्टुभवृत्तसजातीयानि न भवन्ति।

ननु शाक्त्यस्य पराशरस्य पुत्रः कृष्णः । पराशरश्च सुप्रसिद्धो मन्त्रद्रष्टा । दाशतयीषु प्रथमे मण्डले तस्य नव सूक्तानि सन्ति । तस्मात् कृष्णोऽपि ऋङ्मन्त्रयुगस्थ एव भवितुमर्हति नोपनिषद्युगस्थः । एवं कृष्णस्य धृतराष्ट्रपाण्डुजनकत्वं च भारतोक्तमुपपद्येतेति चेत् । उच्यते । अन्य एव शक्तेः पौत्रात् कृष्णाद्भारतकारः कृष्णः । अयमपि पाराशर्यो भवति । अस्य पिता पराशरस्तु मन्त्रकृतः पराशरादन्यः । आयुर्वेदोपदेशकस्यात्रेयस्य पुनर्वसोः शिष्यः । अत्रायं चरकसंहितास्थः श्लोको भवति ।

अग्निवेशश्च भेडश्च जतूकर्णः पराशरः ।
हारीतः क्षारपाणिश्च जगृहुस्तन्मुनेर्वचः ।

चरकसंहिता च चरकेण प्रतिसंस्कृतमग्निवेशकृतं तन्त्रं भवति । "अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते" इति वचनात् । प्रतिसंस्कृते ग्रन्थे मूलं बहुभिरवयवैर्गर्भवतं तिष्ठेदित्यत्र न कश्चित्संशयः ।

तस्मात्तत्र चरकसंहितायामग्निवेशस्य भाषास्तीति वक्तव्यम् । चरकसंहितायाः सर्वा च भाषा ऋग्वेदमन्त्रसंहिताभाषातः सुतराम् अर्वाचीना । तेनाग्निवेशस्य स ब्रह्मचारी पराशरो न मन्त्रद्रष्टा पराशर इति निश्चेतुं शक्यते । अस्य पराशरस्य जतूकर्णः स ब्रह्मचारी ।

जतूकर्णस्य पुत्रो जातूकर्ण्य । पुराणानि द्वैपायनं जातूकर्ण्यपुरःसरं वदन्ति। इदमपि लिङ्गं द्वैपायनो द्वितीयपराशरस्यैव पुत्र इत्यत्र विषये नामसादृश्यभ्रान्तः सौतिर्द्वैपायनमृग्युगस्थपराशरपुत्रत्वेन वर्णितवान् ।

अन्यच्चास्ति लिङ्गं द्वैपायनो द्वितीयपराशरपुत्र एव न मन्त्रकृत्पराशरपुत्र इत्यत्र विषये । महाभारतकारस्तु द्वैपायननामव्युत्पत्तिविषये द्वीपभवत्वाद्वैपायन इति भवार्थे तद्धितप्रत्ययं मन्यते । महाभारतकारादपि प्राचीनः पाणिनिस्तु गोत्रापत्यमित्यर्थे द्वीपशब्दात्तद्धितं विदधाति । "नडादिभ्यः फक्" (४. १. ९९) इति सूत्रे नडादिगणे द्वीपशब्दं पठति । द्वीपस्य गोत्रापत्यमित्यर्थे फकि कृते फस्यायनादेशाद् द्वैपायन इति रूपं सिध्येत् । यदि कृष्णद्वैपायनः प्रथमपराशरस्य पुत्रः तर्हि द्वीपस्य गोत्रापत्यमित्यर्थो नान्वितः स्यात् । वसिष्ठो हि न द्वीपः । शक्तिश्च न द्वीपः । द्वितीयपराशरस्य चेत् पुत्रो द्वीपो नाम तस्य पूर्वजोऽनुमातुं शक्यः ।

अयं च द्वैपायनो व्यासो ब्राह्मणैकदेशभूताभ्य उपनिषद्भ्यः प्राचीन इति गम्यते । यत्तासु ब्रह्मलोकः परमगन्तव्यलोकत्वेनोच्यते । स्वर्ग । (इन्द्रलोकः) ततोऽपकृष्ट एव लोकस्तन्मतेन । पश्यत बृहदारण्यके जनकसदसि गार्गीप्रश्ने याज्ञवल्क्यकृते लोकव्याख्यानम् । भारतमूल-संहितायां तु भीष्मस्वर्गारोहणयुधिष्ठिरस्वर्गारोहणाभ्यां लिङ्गाभ्याम् -

ददर्श तत्र गोविन्दं ब्राह्मेण वपुषान्वितम् ।
तेनैव दृष्टपूर्वेण सादृश्येनैव सूचितम् ।।

इत्यादिभिः श्लोकैः स्वर्गारूढस्य तत्रैव कृष्णदर्शनोक्तेः कृष्णस्यान्ततः स्वर्गप्राप्तेरेव लिङ्गाच्च स्वर्गस्यैव परमगन्तव्यत्वं सूच्यते । यदि व्यास उपनिषदनन्तरकालिकोऽभविष्यत्स्वर्गलोकमेव परमगन्तव्यं लोकं नावर्णयिष्यत् ।

यजुर्वेदब्राह्मणस्थायाः याज्ञिकोपनिषदः (अम्भस्य पारे इत्यादिकायाः) अर्वाचीनोऽयं व्यासः । तस्यामेव ह्युपनिषदि नारायणशब्दः परमेश्वरवाचकत्वेनोपन्यस्तः। तन्नामातीव प्रियं व्यासस्य । यन्नारायणं नमस्कृत्येति स्वकीयमितिहासं प्रारभते ।

वेदाङ्गज्योतिषस्य कालः सर्वैरङ्गीकृतः ईशपूर्वं ११०० वर्षेभ्योऽधिक एव भवति । तदा हि वसन्तसम्पातो भरण्याश्चतुर्थे पादे । तस्मादप्युपनिषदां कालः प्राचीनः । उपनिषत्कालादपि व्यासस्य । ततः स्थूलदृष्ट्या ईश्पूर्वं १५०० वर्षेभ्यो नार्वाचीनो व्यासो जयेतिहासकार इति वक्तुं शक्यते । एवं च ब्राह्मणयुगस्थो व्यास इति सामान्यतः सिद्धान्तः । काठकब्राह्मणे पाराशर्यव्यासनामोल्लेखश्चात्र लक्षी-कर्तव्यः । उपनिषदामाविर्भावात् प्राक् प्राचीनब्राह्मणनामथर्ववेदस्य चाविर्भावादनन्तरं व्यासो जयेतिहासकारो बभूवेति फलितम् । महाभारतकारस्य जयेतिहासकारस्य चान्तरं द्वादशशतवर्षाधिकमेव भवतीत्यत्र न किञ्चित्संशयः ।

## वैशम्पायनकालविचारः

यो व्यासस्य जयेतिहासं प्रतिसंस्कृतवान् प्रथमं तस्य वैशम्पायनस्य कालविचारोऽधुना प्राप्तावसरः । दृश्यते महाभारतं जन्मेजयवैशम्पायन-संवादात्मकम् । किमयं संवादः सत्योऽभूत् । उताहो सौतिना कल्पितः । यदि सत्यः, वैशम्पायनः किं द्वैपायानस्य शिष्यः । आहोस्वित्परम्परा-शिष्यः । जन्मेजयः किमर्जुनस्य प्रपौत्रः । आहोस्विदर्वाचीनस्तत्सनामा तद्वंश्यो राजाऽन्यः । सम्प्रति विचारणीया एते प्रश्नाः ।

यावद्बाधकाभावस्तावन्महाभारतोक्तमङ्गीकर्तव्यं प्रमादाभावात् ।

तस्मादस्तु वैशम्पायनजन्मेजययोः संवादः सत्यः ।

वैशम्पायनस्तु द्वैपायनस्य परम्पराशिष्य एवेति चिन्तामणेर्मतम् । तस्येयमनुमानपरम्परा । सौतिर्न भगवद्गीताकारः अनुगीतया तदनुकरणाल्लिङ्गात् । सा यदि साक्षाद् द्वैपायनस्योच्येत तर्हि उपनिषद्भ्यः प्राचीना प्रसज्येत । शब्दतोऽर्थतश्च यदि परीक्षा क्रियेत तर्हि भगवद्गीतोपनिषद्भ्योऽर्वाचीनैव स्पष्टं प्रतीयते । तस्मात्सा वैशम्पायनस्य वक्तव्या स्यात् । वैशम्पायनो द्वैपायनस्य साक्षाच्छिष्यश्चेत् प्रागुक्तैवानुपपत्तिः । तस्मात्परम्पराशिष्य एव भवितुमर्हतीति ।

सौतेर्न भगवद्गीतेति वयमप्यङ्गीकुर्मः । वैशम्पायनोऽपि व्यासोक्तां मूलां गीतामवलम्ब्यैवेति बृहतीं गीतामकरोदित्यस्माकमभिप्रायः । अयमाचार्यचिन्तामणेर्नासम्मतो विषय इति मन्ये । यत्तस्य शोधकस्य गीतासौतेर्नेत्येवाग्रहः । न द्वैपायनस्यापि नेति दृढं प्रतिपादनम् । वैशम्पायनो व्यासस्य परम्पराशिष्य इति तत्र भवतोऽनुमानं अस्माभिः समर्थ्यते सयुक्तिकत्वात् ।

कोऽस्याचार्यस्य कालः । वेदाङ्गज्यौतिषादर्वाचीन इति ब्रूमः । यद्वेदाङ्गज्यौतिषे पञ्चसंवत्सरमयमेव युगमुच्यते । गीतायां ब्रह्मणो रात्रिदिनयोः प्रत्येकं युगसहस्रात्मकत्वं द्वादशसहस्रसंवत्सरात्मक-युगोद्देशेनोच्यते । नैतावद्बृहद्युगं वेदाङ्गज्यौतिषस्याज्ञातमेव ।

न केवलं वेदाङ्गज्योतिषकारात् बादरयणाच्चायमर्वाचीनो वैशम्पायनः । यद्गीतायां "ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः।" (१३.४) इति स्पष्टं बादरायणस्य ब्रह्मसूत्राण्युल्लिखितानि । ननु "ब्रह्मसूत्रपदैः" इति पदस्य

शाङ्करे भाष्ये यौगिकोऽर्थ स्वीकृतः । न वेदान्तसूत्राणीति चेत् । नैतत्प्रतिबन्धकम् । भाष्यकारस्तु महाभारतं सर्वमेकस्य कृतिं मन्वानो महाभारतब्रह्मसूत्रयोः परस्परोदाहरणविरोधपरिहाराय रूढं सरलमर्थं परित्यज्य यौगिकं क्लिष्टमर्थं शिश्रिये । तस्य विरोधपरिहाराय नान्याऽस्ति गतिः । वयं तु साम्प्रतिकाः परिशोधनगलेन भारतस्य त्रयः कवय इत्यवेदिष्म । एवं स्थिते नास्माकं रूढसरलार्थपरित्यागेन यौगिकक्लिष्टार्थसंश्रयणं शोभते । हेतुमद्भिर्विनिश्चितैरिति विशेषणयोः स्वारस्यं क्लिष्टार्थसंश्रयणे गतं स्यात् । गीतारहस्यकारश्चैतद्विशेषण-बलादेव ब्रह्मसूत्रपदैरित्यस्य वेदान्तसूत्राण्येवार्थ इत्यङ्गीकृतवान् । व्यासस्य मूलगीतामनुसृत्य ब्रह्मसूत्रस्थगीतास्मृत्युदाहरणानि वैशम्पायनेन प्रतिसंस्कृतायां गीतायां ब्रह्मसूत्रोल्लेखश्चेति परस्पर-विरोधपिहारः ।

अपि च गीताशास्त्रं बादरायणस्यातीवपूज्यमासीदिति तस्य प्रमाणत्वेनोदाहरणमेव स्पष्टीकरोति । गीताशास्त्रे परिदृश्यमाने साङख्यमतं सर्वथा समर्थितम् । फलत्यागपूर्वको निःसङ्गः कर्मयोगश्च सुतरां श्लाघितः । सङ्गं त्यक्त्वा फलानि चेत्यादौ । बादरायणस्तु साङख्यसिद्धान्तेषु न किञ्चिदप्यङ्गीकृतवान् । साङख्यानां त्रिगुणां प्रकृतिं निरस्य तस्याः स्थाने तेजोऽबन्नात्मिकां प्रकृतिं स्थापितवान् । फलत्यागपूर्वकनिःसङ्गकर्मयोगमधिकृत्य नैकमपि सूत्रं रचितवान्निजे दर्शने । प्रत्युत "कर्ताशास्त्रार्थवत्त्वात्" (२३.३३) इत्यधिकरणेन जीवस्य कर्तृत्वम् । "फलमत उपपत्तेः" इत्यधिकरणे नेश्वरात्कर्मफलप्राप्तिं च सूत्रयन्नवसरे प्राप्तेरपि फलत्यागपूर्वकनिःसङ्गकर्मयोगं प्रत्युपेक्षितवान् । तस्मात् बादरायणस्योपलब्धायां मूलगीतायां कपिलसाङख्यं फलत्याग-पूर्वकनिःसङ्गकर्मयोगं चाधिकृत्य नास्तीत्येव वक्तुं शक्यते । यदि

मूलं गीतायां द्वयोः प्रतिपादनं प्रकृतगीतायामिवावर्तिष्यत तर्हि बादरायणस्तथा निष्कण्टकं साङ्ख्यं न निराकरिष्यत् । अकरिष्यच्चैकं फलत्यागपूर्वकनिःसङ्गकर्मयोगमधिकृत्याधिकरणम् । तदा तस्येशोपनिषदः प्रथमौ द्वौ मन्त्रौ साहाय्यकं कर्तुं प्रभवतः । गीताशास्त्रोपबृंहितयोस्तयोस्तादृशोऽर्थः कर्तुं शक्यः ।

केचिन्न केवलं वैशम्पायनात् सौतेरप्यर्वाचीनं बादरायणं मन्यन्ते। तन्न विचारसहम् । बादरायणो जैमिनिश्च समकालिकावित्यत्र न कस्यचिद्विवादः । जैमिनेः पूर्वमीमांसादर्शने सहस्रसंवत्सरमत्र चर्चायामेक ऐतिहासिको विषयः स्पष्टो भवति (जैमिनीसूत्रम् ६.७. ३१-४०) । सूत्रकारस्य जैमिनेः काले बहुसहस्रवर्षजीविनां मानवानां कथाप्रचारो नास्तीति । अस्ति स सौतेः काले । ययातिश्रीरामप्रभृतीन् सौतिर्बहुसहस्रवर्षजीविनो हि वदति । तस्माज्जैमिनिः सौतेः प्राचीन इति तर्कः साधुः । का सा सहस्रसंवत्सरसत्रचर्चा । मनुष्याणां सहस्रवर्षायुषोऽसम्भवात् सहस्रं वत्सरसत्रं देवयोनिनामिति पूर्वपक्षः । शास्त्रस्य मनुष्याधिकारत्वान् मनुष्याणामेवेति सिद्धान्तः । तत्र मनुष्याणां सहस्रवर्षायुषोऽसम्भवः सामर्थ्यराहित्यादुदाहरणदर्शनाच्च पक्ष-द्वयेनाप्यङ्गीकृतः । एकदेशी कार्ष्णाजिनिर्नामाचार्यस्तं कुलकल्पं ब्रवीति । एकेनारब्धं कर्म यावत्सहस्रवर्षं क्रमेण तद्वंश्याश्चालयेयुरिति कुलकल्पपद्धतिः । सिद्धान्ती लावुकायनो नामाचार्यः विधायकवाक्ये सहस्रशब्दः संवत्सरशब्दो वा गौणार्थः कार्य इत्यभिप्रायं दत्तवान् ।*

---

*सहस्रसंवत्सरसत्राधिकरणसूत्राणि । "सहस्रसंवत्सरं तदायुषामसम्भवान्मनुष्येषु । अपि वा तदधिकारान्मनुष्यधर्मः स्यात् । नासामर्थ्यात् । सम्बन्धादर्शनात् । सकुलकल्पः स्यादिति कार्ष्णाजिनिरेकस्मिन्न सम्भवात् । अपि वा कृत्स्नसंयोगादेकस्यैव प्रयोगः स्यात् । विप्रतिषेधात्तु गुण्यन्यतरः स्यादिति लावुकायनः । संवत्सरो विचालित्वात् । सा प्रकृतिस्स्यादधिकारात् । अहानि वाऽभिसङ्ख्यत्वात्।"

तदनुसारेण जैमिनिः संवत्सरशब्दमेव गौणं कृत्वा संवत्सरसहस्रं दिनसहस्रपरं स्थापितवान् । सौतेर्महाभारतं चेत् सूत्रकाराज्जैमिनेः पूर्वं स्यात् तत्सत्रं पूर्वयुगजातानां दीर्घायुषामिति पक्ष एकः प्रत्यवतिष्ठेत । तत्प्रस्ताव एव नास्ति ।

इतश्च पूर्वमीमांसादर्शनाकारान्महाभारतमर्वाचीनम् । सर्वा च गीता मूलभारतस्था । गीतैकदेश एव मूलभारतस्थः । यतः-

यमिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ।।
कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ।।
भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम् ।
व्यवसायत्मिका बुद्धिः समाधौ न विधीयते ।।"

(भीष्मपर्वम् २६.४२-४४)

इति गीताश्लोकैर्जैमिनिमतानुयायिन एव निन्द्यन्ते । वेदवादरतत्वं च वेदवाक्यार्थविचारः । नान्यदस्तीति वादश्च कर्मणो न परं किञ्चिद्विद्यत इति वादः । स्वर्गपरत्वं च स्वर्गस्यैव परमगन्तव्यत्वेन ज्ञानम् । इदं च सर्वं जैमिन्युपज्ञस्य शास्त्रस्य खण्डनार्थमुपक्षेपणम् । जैमिनेः पूर्वमस्य मतस्य नासीत् प्रचारः। अस्तु नाम यागप्रचारः। सोऽन्यो नान्यदस्तीति वादात् । तस्माज्जैमिनेरर्वाचीनोऽयं ग्रन्थः। एतेन जैमिनिसम-कालिकाद्बादरायणादर्वाचीनं महाभारतनिर्माणं गीतैकदेशनिर्माणं चेति दृढीभवति ।

इतश्च महाभारतनिर्माणमनन्तरं बादरायणात् वेदान्तदर्शने

वैशेषिकमतस्यैव खण्डनमस्ति न न्यायमतस्य । तस्य खण्डनं चावश्यं करणीयं वेदान्तसिद्धान्तविरुद्धानां बहूनां सिद्धान्तानां तत्र सद्भावात् । न कृतं केन हेतुना । साङ्ख्ययोगवैशेषिकबौद्धजैनपाशुपतपाञ्चरात्र-वदस्यापि प्राधान्यं निर्विवादम् । अर्वाचीनत्वादप्राप्तिरेव तत्र कारणं वक्तव्यम् । महाभारतं तु न्यायदर्शनादर्वाचीनमित्यनुमातुं शक्यते । "पञ्चावयवयुक्तस्य वाच्यस्य गुणदोषवित् ।" इति सभापर्वस्थ (?) दध्याये नारदवर्णने विद्यते । अत्र पञ्चावयवाश्च न्यायशास्त्रप्रसिद्धाः (प्रतिज्ञाहेतुदृष्टान्तोपनिगमनानि) वैद्यमहाशयश्चात्र न्यायदर्शनोल्लेख एव सम्पद्यत इत्यङ्गीकरोति॥

इतश्च महाभारताद्वेदान्तदर्शनं प्राचीनम् । भगवद्गीतैकदेशाच्च । वेदान्तदर्शने ध्यानयोगः "आसीनः सम्भवात्" इत्यादिनौपनिषद-पद्धत्याऽऽत्मनि ब्रह्मभावनारूप एवोपदिष्टः । न तत्र शारीरे हठः कश्चिदुच्यते । महाभारतान्तर्गतगीतैकदेशे तु "सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन्" इति ध्यानयोगे हठयोगमुद्रा काचिदुपदिश्यते । यां भूचरीमाहुः । को ग्रन्थः प्राचीनः । वाचका एव परीक्षन्ताम् । एकं प्राचीनोपनिषदां सन्निकृष्टम् । अन्यदर्वाचीनानाम् ।

ननु "एतेन योगः प्रत्युक्तः ।" इति बादरायणेन योगमतं खण्डितम् । योगदर्शनकारः पतञ्जलिः । स च "स्वरूपं शब्दस्याशब्दसंज्ञा" इति पाणिनिसूत्रस्य भाष्ये "जित्पर्यायवचनस्यैव राजाद्यर्थम् ।" इति वार्तिकं व्याचक्षाणः प्रत्युदाहरणत्वेन "पुष्पमित्रसभा चन्द्रगुप्तसभा" इत्युदाहरति । तस्मात्पतञ्जलिः पुष्पमित्रादप्यर्वाचीन इति गम्यते । समकालिको वा तस्य स्यात् । योगदर्शनोल्लेखाद्बादरायणः पतञ्जलेरप्यर्वाचीनो वक्तव्यः । तस्मादप्यर्वाचीनं चेद्भारतं परिदृश्यमानं सुतरामर्वाचीनं प्रसज्येत ।

पुष्पमित्रस्य काल एव मिलिन्दस्य यवनेश्वरस्य दण्डयात्राः । तदैव यवनपण्डितसहवासप्राबल्याद् अस्मदीयानां ज्यौतिषे राशिज्ञानं सम्पन्नम् । तस्मात्ततःप्रभृति राशियुगमिति चारित्रिकं नाम दातुं योग्यम् । महाभारते क्वचिदपि नास्ति राशीनाम् उल्लेखः । तस्मात्तन्निर्माणं राशियुगात्प्रागेव सम्पन्नमिति वक्तव्यम् । बादरायणादर्वाचीनत्वमेवं महाभारतस्यासङ्गतमिति चेत् । नास्तीदृशस्य भयस्यावकाशः । "अथ तद्दर्शनाभ्युपायो योगः" इति सूत्रेणोपक्रान्तः कापिलसाङ्ख्यानुबन्धी तदीयसिद्धान्तप्रतिष्ठो योग एव बादरायणेन निराक्रियते न पातञ्जलो योगः । भगवता शङ्करेणापि भाष्ये स एव ग्रन्थ उदाहृतः । न पातञ्जलः । स च सम्प्रति खिलत्वान्नोपलभ्यते । तस्मान्न भेतव्यं बादरायणस्य प्राचीनत्वाङ्गीकारे पतञ्जलेरप्यर्वाचीनं महाभारतं प्रसज्येतेति ।

भवद्भिरपि तादृशं पातञ्जलादपि प्राचीनं योगदर्शनं अङ्गी- कर्तव्यम् । अन्यथा महाभारते भगवद्गीतासु च योगशास्त्रमसकृदुल्लिखितं पातञ्जलमेवाक्षिपेत् । न केवलं योगशब्दः । "समाधौ न विधीयते" इति समाधिशब्दश्च गीतायां प्रयुज्यते । स च योगशास्त्रमात्रप्रसिद्धः शब्दः । तस्मान्महाभारतादपि प्राचीनमेकं योगशास्त्रं सपरिभाषं ग्रन्थरूपमासीदिति वक्तव्यम् । तदेव बादरायणादपि पूर्वम् ।

अपर आह । पातञ्जलदर्शनस्य व्यासभाष्यमेकं विद्यते । स च भाष्यकारो व्यासो बादरायणः स्यादिति । इदं पदार्थबोधमूलकं कल्पनम् । क्व योगस्य निराकर्ता बादरायणः । क्व योगदर्शनभाष्यम् । तस्य भाष्यस्यापि कर्ता पतञ्जलिरेव भवति । समासतः सूत्रयित्वा व्यासतो भाष्यं चकार स योगदर्शनस्य । तेन व्यासतो यद्भाष्यं कृतं तदेव व्यासभाष्यम् । न व्यासेन व्यक्त्याकृतम् ।

अन्यदस्ति लिङ्गम् । पतञ्जलेरपि प्राचीनो बादरायण इति विषये "नडादिभ्यः फक्" पाणिनिसूत्रस्य नडादिगणपाठे बदरशब्दोऽस्ति । प्रायो गणपाठे पठिताः शब्दाः पाणिनेरेव भवन्ति । पाणिनीयत्वात् गणपाठस्य। क्वचित्तेषामपर्याप्तत्वे गणसूत्रेण केवलं शब्दपाठेन वार्तिककारस्तं गणं पूरयेत् । अत्र गोत्रापत्यमित्यर्थे नडादिभ्यः फक् विधीयते । नाडायन इत्यादिरूपसिद्ध्यर्थम् । अत्र गणे बादरायणरूपसिद्धये बदरशब्दः पठितः । बादरायणश्च बदरस्य पौत्रः । तस्य पुत्रो बादरिर्बादरायणस्य पिता बादरायणसमकालिकः । जैमिनिबादरायणतन्त्रयोर्यावन्त आचार्या उल्लिखितास्ते सर्वे तत्समकालिका एव भवन्ति । यदि तयोरपेक्षया प्राञ्चो भवेयुस्तर्हि ग्रन्थकृत इति वक्तव्यं स्यात् । ग्रन्थं विना प्राचीनस्य मतं कथं ज्ञातुं शक्यम् । तेषां ग्रन्थाः क्वापि नोपलभ्यन्ते । तेषां ग्रन्थकृत्वप्रसिद्धिश्च नास्ति । अपि च पूर्वमीमांसायामपशूद्राधिकरणे जैमिनिबादर्योः पक्षप्रतिपक्षस्वीकारेण बादो दृश्यते । बादर्यात्रेययोश्च सा सम्पूर्णा चर्चा समकालिकानामिव दृश्यते । आपत्तिदानानि परिहरणानि च समकालिकानामिव भवन्ति । तस्माद्बादरायणादपि पूर्वेषां बदरगोत्रजानां बादरायणानां रूपसिद्धये पाणिनेर्नडादिगणे बदरशब्दपाठ इति वाद आश्रयितुमशक्यत्वात् । बदरपुत्रसमकालिकस्य बादरायणस्य बदरपौत्रत्वस्यैव सम्भवेन ततः प्राचीनानबादरायणानाम् असम्भवात् । अपि च बदरापेक्षया बादरायण एव मुख्यो गोत्रचर्चासु । शुद्धाङ्गिरसु बादरायणगोत्रमेकं हि दृश्यते न बदरगोत्रम् । बादरायणगोत्रजन्मानो ब्राह्मणाः द्रविडेषु महाराष्ट्रेषु च दृश्यन्ते । एवं बदरो बादरायण-पितामहत्वेनैव प्रसिद्धः बादरायण एव गोत्रकृत्त्वेनेति सिध्यति । ईदृशो गोत्रकृन्मुनिः पतञ्जलेरप्यर्वाचीनो यद्युच्येत बौधायन आचार्यः (गोत्रप्रवराध्यायकृत् ब्रह्मसूत्रवृत्तिकृच्च) ततोऽप्यर्वाचीनः प्रसज्येत ।

महाभारतेऽश्वमेधपर्वणि "श्रवणादीनि ऋक्षाणि" इति स्पष्ट उल्लेखोऽस्ति । धनिष्ठादीन्येव ऋक्षाणीति श्रौतसूत्रे स्पष्टं वदति बौधायनः। तस्माद्बौधायनो महाभारतनिर्माणादर्वाचीनं कालं प्रतिनेतुमशक्यः ।*

नन्वस्तु बौधायनोक्तो गोत्रकृत् बादरायणोऽन्यः प्रसिद्ध- बारायणस्य पूर्वज इति चेत्प्रसिद्धपरित्यागेनाप्रसिद्धकल्पनं बादरेर्बादरायण-जैमिन्यपेक्षया न्यायविरोधेन सुतरां प्राचीनत्वकल्पनं च प्रसज्येयाताम् । अन्ये च दोषाः प्रागुक्ताः सन्त्येव।

"ननु नडादिभ्यः फक्" इति सूत्रस्य गणपाठे बदरशब्दं वार्तिककारः प्रक्षिप्तवान्बादरायणरूपसिद्ध्यर्थमिति ब्रूम इति चेत् तथापि न बादरायणस्य महाभारतनिर्माणादर्वाचीनत्वसिद्धिः । वार्तिककारस्य महाभारतकारादपि प्राचीनत्वात् । न केवलं महाभारतकारात् । न्यायदर्शनकाराच्च प्राचीनः । यद्वार्तिककारो व्यक्त्याकृती उभावेवार्थौ स्ववार्तिकेषु पक्षीकृत्य मीमांसते शब्दार्थचर्चायाम् । न्यायदर्शनकारस्य तु व्यक्त्याकृतिजातयस्त्रयोऽर्थाः । जातिराकृतेर्भिन्ना तस्य । वार्तिककारः पूर्वमीमांसाकारो जैमिनिश्चाकृतेर्भिन्नां जातिं न जानीतः। एतस्माच्च कारणाज्जैमिनिकात्यायनाभ्यामर्वाचीनो न्यायदर्शनकार इत्यनुमातुं शक्यते । किमु वक्तव्यं तस्मादप्यर्वाचीनस्य महाभारतकारस्य विषये ।

इतश्च जैमिनेरर्वाचीनो न्यायदर्शनकारः । जैमिनेः शब्दनित्यत्ववादे यानि कारणान्युक्तानि तानि सर्वाण्यपि परिहृतानि गौतमेन । गौतमेन

---

* "उभे काष्ठे अभियजेत । माघमासे धनिष्ठाभिरुत्तरेणैति भानुमान् । अधाश्लेषस्य श्रावणस्य दक्षिणेनोपनिवर्तते । इत्येते काष्ठे भवतः।" (बोधायनश्रौतसूत्रम् २६.२९.३०)

यान्युक्तानि शब्दस्यानित्यत्वे कारणानि तान्यपहृतानि जैमिनिना । तस्मान्नास्ति जैमिनिसमकालिको बादरायणो महाभारतकारादप्यर्वाचीन इति । स्थितमेव वैशम्पायनादपि प्राचीन इति ।

नन्वेवं चेद्वैशम्पायनो बुद्धादर्वाचीनः प्रसज्येत । बादरायणेन हि जैनबौद्धमते खण्डिते निजे दर्शने । नैषा विप्रतिपत्तिः । महावीरसिद्धार्थयोर्जननात्प्रागपि लोकायतिकक्षणिकविज्ञानशून्य-मूलवादानां बीजानि सन्त्येव । जैना बुद्धाश्चैतदङ्गीकुर्वन्ति । सुगतो बुद्धः शाक्यमुनेर्बुद्धाद्भिन्न एव भवति । अत एवामरसिंहश्च "सर्वज्ञः सुगतो बुद्धः" इत्यादिना सुगतस्य नामधेयान्यभिधाय । "शाक्यमुनिस्तु यः" इत्यादिना तु शब्दप्रयोगाद्गौतमबुद्धं सुगतात्पृथक्करोति । न च महावीरो वर्धमानापरपर्याय एव सर्वज्ञादिपदाभिधेय इति वाच्यम् । महावीरवर्धमानशब्दयोस्तत्रापाठात् । वर्धमानस्य जिनसंज्ञा गौतमस्य बुद्धसंज्ञा च शङ्करसंज्ञेव तत्पीठस्थानाम् । वर्धमानशाक्यमुनी उभावपि जीर्णप्रायजैनबौद्धसम्प्रदायोद्धारकावेव न नूतनसम्प्रदायप्रवर्तकाविति तच्चरित्राभिज्ञानां विदितो विषयः । यथा प्रागेव स्थितस्य पाञ्चरात्र-सम्प्रदायस्य रामानुजस्तद्वत् । छान्दोग्येऽपि शून्यवादमूलसूत्रमनूद्य खण्डितम् । "तद्धैक आहुरसदेवेदमग्र आसी"दित्यादिना । बृहदारण्यकोपनिषदपि निद्रावर्णने "अत्र स्तेनोऽस्तेनोभवती भ्रूणहा-ऽभ्रूणहा चाण्डालोऽचाण्डालः पौल्कसोऽपौल्कसः श्रमणोऽश्रमण-स्तापसोऽतापसः" इति श्रमणमुल्लिखति । श्रमणश्च जैनसन्न्यासी । यदि वर्धमानसिद्धार्थाभ्यां प्राक् तन्मतप्रस्ताव एव नास्तीत्यभ्युपगम्येत तर्हि च्छान्दोग्यबृहदारण्यकोपनिषदी अपि गौतमबुद्धादर्वाचीने प्रसज्येयाताम् । तस्माद्ब्रह्मसूत्रेषु खण्डिताः लोकायतिकक्षणिकविज्ञानशून्यसिद्धान्ताः वर्धमानसिद्धार्थाभ्यां जन्मतः पूर्वं स्थिता इत्येव सुवचनम् । एवं च

महाभारतोदाहृतो जैमिनिः आश्वलायनोदाहृतो जैमिनिश्च सूत्रकारा-ज्जैमिनेरन्यो न कल्पयितव्यः । द्वैपायनबादरायणौ तु भिन्नावेव भवेताम् । एक उपनिषद्भ्योपि प्राचीनः । अन्योऽर्वाचीनस्ताभ्यः । पूर्वस्य ग्रन्थ उत्तरस्थस्मृतिरासीत् । स्वस्यैव ग्रन्थं स्मृतित्वेन न कोऽप्युदाहरेत् ।

सुमन्तुजैमिनिवैशम्पायनपैलाः सब्रह्मचारिण इति महाभारतोक्तं यदि सत्यं तर्हि तेषां गुरुर्बादरायणव्यास एवेत्यत्र न कश्चित्संशयः। द्वैपायनस्तु गुरुपरम्परायां परमः । अयं तु पुनर्विचारणीयो विषयः। न सिद्धान्तयाऽङ्गीकर्तुं शक्यते ।

विभूतियोगाध्याये "हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः।" "सेनानीनामहं स्कन्दः" इति पाणिनिव्याकरण-विरुद्धप्रयोगदर्शनाद्वैशम्पायनो व्याकरणसूत्रकारात् पाणिनेः प्राचीन इत्यनुमानम् । ननु सोऽध्यायो व्यासस्य स्यात् । न । "मुनीनामप्यहं व्यास" इति व्यासस्य विभूतित्वेन कथनात् । व्यास एवात्मस्तुतिं तथा कृतवानिति वक्तुमसाम्प्रतम् । बैशम्पायनस्य तु व्यासस्तुतिर्युक्तैव भवति । भागवताद्यर्वाचीनग्रन्थेषु तत्र तत्र दृष्टा व्याकरणविरुद्धाः प्रयोगास्तु ग्रन्थकृत ऋषित्वद्योतनाय तत्र कविना बुद्धिपूर्वकं कृता इति न तद्दृष्टान्तोऽत्र युक्तः । एवं च वैशम्पायनः पाणिनेरपि प्राचीन इति सिद्धान्तः । ईशपूर्वात् किञ्चिदूनाधिकसहस्रवर्षमिते काले स बभूवेति वक्तुं शक्यम् ।

भारतस्य श्रोता जन्मेजयस्तु तत्समकालिकः प्राचीनपरिक्षिद्वंश्यः कश्चिद्राजा । परिक्षित्पुत्राज्जन्मेजयादैतरेयशतपथब्राह्मणप्रसिद्धादन्य एव भवति । स परिक्षिद्गोत्रजत्वात् पारिक्षितः । तस्य सर्पयागं प्रतिविचारयितुं

नेदं स्थलम् । वैशम्पायनसमकालिकत्वादेव हेतोरस्य साक्षादर्जुन-प्रपौत्रत्वं नेति यदुक्तं तदेवालमत्र प्रकरणे । अर्जुनपौत्रं परिक्षितमारभ्य पुराणेषु या वंशावली दीयते सा न विश्वसनीया । प्राचीनभारतीय-मतानुवादियवनपण्डितोक्तपुरुषान्तविरोधात् तस्माद्यावत्परिक्षितो जन्मेति श्लोको न कस्मैचित्कालनिरूपणायोपयुज्येते । परिक्षिते काले सप्तर्षयो मघायुक्ताः नन्दकाले पूर्वाषाढायुक्ताः । तेषां शतं शतं वर्षाणि नक्षत्र एकैकस्मिन् स्थितिरित्यादिपौराणिककल्पनं ज्योतिर्विदो नाङ्गीकर्तुं प्रभवेयुः। इतरेषां नक्षत्राणामिव सप्तानामृषीणामपि स्थिरगोलत्वात् । यदि नन्दकाले ते पूर्वाषाढानक्षत्रे स्युस्तर्हि तैरधुना स्वातीनक्षत्रे वर्तितव्यम् । तस्मान्निरुपयोगः कालनिर्णये सप्तर्षिविचारः स्वयमेव पूर्वमसिद्धत्वात् ।

पञ्चमं प्रकरणम्

# युगविचारः

समाप्ता प्रायो बहिरङ्गपरीक्षा । ऋङ्मन्त्रयुगमध्यकाले पाण्डवा आसन् । उपनिषत्पूर्वकाले जयेतिहासकारो व्यासः । उपनिषद्भ्यो वेदाङ्गज्यौतिषाच्चानन्तरे काले वैशम्पायनः । अशोकस्य काले सौतिः । अयं पर्यवसन्नः सिद्धान्तः । पाण्डवकथाकालविषये परिहर्तव्यम् एकमवशिष्टम् । "प्राप्तं कलियुगं विद्धि" । "एतत्कलियुगं नाम अचिराद्यत्प्रवर्तते" । अन्तरे चैव सम्प्राप्ते कलिद्वापरयोरभूत् । स्यमन्तपञ्चके युद्धं कुरुपाण्डवसेनयोः ।" इति महाभारतस्य वचनानि कलियुगादौ भारतयुद्धं प्रवृत्तमिति वदन्ति । एतेषां वचनानां तृप्तिं कर्तुमेवाचार्यचिन्तामणिः पाण्डवानां कालनिर्णयं प्रति ऋङ्मन्त्र-संहितापर्यन्तं धावन्नपि पुनर्ब्राह्मणकालं प्रत्यायातः । सम्प्रति तानि परिहर्तव्यानि । नचेदृङ्मन्त्रयुगमध्यवादो न दृढं तिष्ठेत् ।

अत्रेदं पृच्छामः । किं कलियुगमेकमेव द्वात्रिंशत्सहस्रोत्तर-चतुर्लक्षणवर्षमितम् । उताहो अन्यान्यपि युगानि यथा पञ्चाङ्गोक्त-प्रमाणानि । नाद्यः । अर्धजरतीयन्यायेन कार्यासिद्धेः । यदि पञ्चाङ्गस्थं सूर्यसिद्धान्ताद्युक्तं युगवर्षप्रमाणं सत्यं ग्राह्यम् । कलिप्रमाणमात्रं सारभदिवसं गृहीत्वाऽन्येषां युगानां प्रमाणानि प्रत्युपेक्षाकर्तुमशक्या । यद्युपेक्ष्येत सर्वमपेक्ष्यम्। न द्वितीयः । प्राचीनभारतपण्डितमतानुयायि-यवनपण्डितोक्तदक्षकालविरोधापत्तेः ।

अपि च महाभारते मनुस्मृतौ च यच्चतुर्युगप्रमाणमुच्यते तद्द्वादश-सहस्रवर्षात्मकम् । न तत्र वर्षाणि दिव्यान्युच्यन्ते । अर्वाचीन विष्णुपुराणसूर्यसिद्धान्तादिग्रन्थसामरस्याय तेषां दिव्यत्वमर्वाचीनैः कल्प्यते । न तद्विमर्शसहम् । मनुस्मृतौ तु द्वादशसहस्रात्मकं युगं तु देवानां युगमुच्यते । दिव्यत्वं युगस्यैव न वर्षस्येति वाचकैर्लक्षीकर्तव्यो विषयः । अमरसिंहोऽपि "मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः" इति युगस्यैव दिव्यत्वं वदति न वर्षस्य । दिव्ययुगकीर्तनेन मानुषं युगमन्यद्विद्यत इति स्फुटं प्रतीयते । तत्प्रायः पञ्चसंवत्सरमयं स्यात् । केचित्तु सावनं मानमेव मानवं चान्द्रं पित्र्यं सौरं दिव्यं च मन्यन्ते । तद्वर्षस्य मानवत्वादिचर्चायामुपयुक्तं भवेत् । न युगस्य ।

प्रकृतमनुसरामः । यदि विष्णुपुराणाद्युक्तविधया द्वादशसहस्राणि वर्षाणां षष्ट्युत्तरत्रिशतगुणितानि कुर्मः । तर्हि यादृश्यापत्ति सा दर्शिता । यदि न कुर्मस्तर्हि कलियुगस्य प्रमाणं द्वादशशतान्येव वर्षाणाम् । तद्रीत्या सम्प्रति कृतयुगस्य चतुर्थः पादः स्यात् । एतत्कष्टमालोच्यैव शोधकाः युगस्य मानववर्षसङ्ख्यां वक्तुं बिभ्यति । नास्त्यस्य कष्टस्य न निवारणोपायः । यन्महाभारते तदनुसारिण्यां मनुस्मृतौ च कृतादीनां प्रमाणमुक्तम् । तत्पूर्णे चतुर्युगे धर्मस्य पादक्रमेण ह्रासं पश्यता सौतिनाऽनुमाने कल्पितम् । त्रेतायां त्रिपाद्धर्मः द्वापरे द्विपादिति नामलिङ्गाभ्यामनुमितिः कृता । तदनुसारेण कलौ धर्म एकपात्कृते चतुष्पादिति कल्पनं कृतम् । पादसङ्ख्याक्रमेण तत्तद्युगवर्षसङ्ख्योक्ता । वस्तुतस्तु धर्मो यदि वर्धते क्रमेण वर्धते । यदि क्षीयेत क्रमेण क्षीयत । न कल्यन्ते शून्यबिन्दुं प्रत्यागत्याकस्मात्कृतादौ पूर्णरूपं प्राप्नुयात् । महाभारतदपि प्राचीनतमैतरेयब्राह्मणं युगान्यधिकृत्यैवं वदति ।

कलिः शयाने भवति सञ्जिहानस्तु द्वापरः ।

उत्तिष्ठंस्त्रेता भवति कृतं सम्पद्यते चरन् ।।

अहोरात्रेणोपमीयतेऽत्र चतुर्युगम् । शयान इति रात्रेर्लक्षकं पदम् । चरन्नित्यह्नः । सञ्जिहान इति सायं सन्ध्यायाः । उत्तिष्ठन्नित्युषसः (प्रातः सन्ध्यायाः) उज्ज्वलं युगं कृतयुगम् । तामसं कलियुगम् । तमः प्रकाशमिश्रे अन्ये युगे । त्रेतायां क्रमात् प्रकाशस्याभिवृद्धिः। द्वापरे तमस इति विशेषः समाजस्येश्वरप्रवणत्वं ज्योतिः । संसारप्रवणत्वं तम इति व्याख्येयम् । एकत्र जीवितयात्रालक्ष्यं पारमार्थिकं सुखम् । अन्यत्र संसारिकम् । एतदौपम्यगम्यं किमपि तात्पर्यम् । अन्यच्चौपम्येन गम्यते । अहोरात्रप्रमाणं षष्टिर्घटिकाः । युगस्य द्वादशवर्षसहस्राणि । उषसः पञ्चसायाह्नस्य पञ्चदिनस्य पञ्चविंशतिः रात्रेः पञ्चविंशतिरिति यथा विभजामः तथा त्रेतायाः सहस्रं वर्षाणि द्वापरस्य सहस्रं कृतस्य पञ्चसहस्राणि कलेः पञ्चसहस्राणीति विभाग इति । त्रेताद्वापरौ सन्धि-युगे । कृतकलीमुख्ययुगे इति च । महाभारतेऽपि सन्ध्यासन्ध्यांशप्रामाण्यं सहस्रद्वयमेवोच्यते । अत्रोभे सन्ध्ये उभे युगे इति विशेषः । तद्रीत्या सम्प्रति कतिपयैर्वर्षैस्त्रेतायुगमारब्धम् । गतः कलिर्गते विकारिणि वर्षे । त्रेता च कलिकृतसन्ध्या । भारतयुद्धं तथापि कृतयुग एव प्रसज्येतेति चेत् । नैष दोषः युगसङ्ख्यानस्येव कलियुगयुद्धप्रतिपादकवचननां च सौतेरेव कल्पनत्वात् । दिव्यवर्षगणितेन मानववर्षगणितेन चोभयथापि तत्प्रोक्तसङ्ख्यानस्य विफलत्वात्तदुक्तकलियुगारम्भ-भारतयुद्धप्रतिपादकवचनानि विश्वसितुमशक्यानि ।

षष्ठं प्रकरणम्

## एतशारिः सूर्यः कः?

निरूपितं तृतीयस्मिन्प्रकरणे भारतचरित्रमार्द्रायुगे निर्वृत्तमिति । यदि तत्सत्यमृग्वेदसंहितायां भारतचरित्रसूचनेनावश्यं वर्तितव्यमिति प्रतिवादी पृच्छेत् । यद्यपि स्तुतिग्रन्थे तत्समकालिकचरित्रोल्लेखनमवश्यं वर्तितव्यमिति नास्ति नियमः तथापि केषाञ्चिदितरेषां चरित्रांशानां तत्रोल्लिखितत्वादीदृशसुप्रसिद्धचरित्रांशानुल्लेखः सन्देहस्य पुनः कारणं स्यात् । अस्त्युल्लेख इति ब्रूमः । अत्रैषा परीक्षा भवति ।

अस्ति ऋग्वेदसंहितायां भगवानिन्द्र एतशं नाम ऋषिं सूर्याद्ररक्षेति कथा । तत्रैतशारिः किं साक्षात्सूर्यः । उताहो सूर्यस्य तेजोंशावतारः कश्चिन्महापुरुषः । आहोस्वित्सूर्यो नाम कश्चित् साधारणो वीरः । न साधारणो वीरः । यदुच्यते “यत्रोत मर्त्याय कमरिणा इन्द्र सूर्यम् । प्रावः शचीभिरेतशम् ।” (ऋक्संहिता ४. ३०. ६ वामदेवः) ।

उत अपि च । यत्र यस्मिन्युद्धे । मर्त्याय मरणधर्मवते एतशाय । सूर्यम् । अरिणाः अहिंसीः एतशार्थं सूर्यमहिंसीरिति यावत् । तत्र युद्धे शचीभिः कर्मभिः । एतशम् । प्रावः प्रकर्षेण रक्ष । कमिति पूरणो निपातः । अस्यामृचि एतशार्थमिन्द्रेण कृता सूर्यस्य हिंसा तदा बहुभिः कर्मभिरिन्द्रकृतैतशस्य रक्षा च प्रतिपाद्येते । अत्र मर्त्याय सूर्यमरिणा इति देवतायाः प्रभाववर्णनम् । यदि सूर्यः साधारणो मनुष्यः स्यात्तर्हि मर्त्याय सूर्यमिति सूर्यस्य

मर्त्यविलक्षणत्वोक्तिर्न सङ्गच्छेत ।

अपरा चात्र ऋग्भवति -

अधक्रत्वा मघवन् तुभ्यं देवा अनु विश्वे अददुः सोमपेयम् ।
यत्सूर्यस्य हरितः पतन्तीः पुरः सतीरुपरा एतशे कः ॥
(ऋक्संहिता ५.२९.५ गौरवीतिः)

मघवन् हे इन्द्र । यत् यस्मात्कारणात् । एतशे । पतन्तीः अभिद्रवन्तीः । पुरः सतीः अभिमुखीः । सूर्यस्य हरितः अश्वान् उपराः पराङ्मुखीः कः अकरोः । (तस्मात् कारणात्) अध अनन्तरं । क्रत्वा तेन सूर्याश्वपराङ्मुखीकरणेन कर्मणा । तुभ्यं । विश्वे सर्वे । देवाः सोमपेयं सोमपानं । अन्वददुः आनुपूर्व्येण दत्तवन्तः । यन्महान्तं सूर्यमजयस्तस्मात्सर्वेषां देवानाम् आराध्योऽभव इति यावत् ।

यद्येष सूर्यः साधारणो मनुष्यः स्यात् तज्जयादिन्द्रस्य सर्वदेवतास्वाधिक्यं न सङ्गच्छेत ।

ऋचोरनयोरयमैतिहासिकोंऽशः प्रतीतो भवति । "सूर्यैतशयो- र्युद्धमभूत् । तत्र सूर्यस्याश्वानेतशेऽभिद्रवत इन्द्रः पराङ्मुखानकरोत् । अपि चैतशस्यार्थे सूर्यं हिंसितवान् । एतशं रक्षितवान् । स च सूर्यो न साधारणो मनुष्यः ।"

न चायमेतशारिः साक्षात्सूर्यः । साक्षात्सूर्यस्य मनुष्येण सह युद्धस्यासम्भवात् । साक्षात्सूर्येण सह मनुष्यस्य द्वेषासम्भवाच्च । परिशेषादयं सूर्यस्य तेजोंशावतारो महापुरुषः । मानवजन्मापि

दिव्यप्रकृतिकः । प्रमाणं चात्रेदं भवति ।

अस्मा इदु त्यदनु दाय्येषामेको यद्वव्रे भूरेरीशानः ।
प्रैतशं सूर्ये पस्पृधानं सौवश्व्ये सुष्विमावदिन्द्रः ।।

(ऋक्संहिता १. ६१. १५ नोधाः)

यत् यस्मात्कारणात् । भूरेः प्रभूतस्य जगतः । ईशानः पतिः इन्द्रः । एकः एव । वव्रे आवृतवान् । व्यापकत्वेन भुवनं पराक्रमेण शत्रून्वेति योग्यकर्माध्याहारः । अत्र वृणोतिर्वृत्रवरुणादिशब्देष्विवावरणार्थकः । (तस्मात् कारणात्) अस्मा इत् अस्मै इन्द्रायैव एषां सर्वेषां देवानां मनुष्याणां च सम्बन्धि । त्यत् प्रसिद्धं सोमरूपं हविः । अनुदायि आनुपर्व्येणादायि। उ पूरणो निपातः । अनुविश्वे अददुः सोमपेयम् इत्येवात्राप्यर्थसङ्गतिः। विशिष्टं महतः शात्रवाद्भक्तस्य रक्षणं कर्मोत्तरार्धेनाह । इन्द्र सौवश्व्ये स्वश्वपुत्रे । सूर्ये सूर्यविषये । पस्पृधानं स्पर्धमानं सूर्यमभिभवितुमिच्छन्तमित्यर्थः । सुष्विं सोमानां स्तोतारं । एतशं प्रावत् प्रकर्षेणारक्षत् ।

उत्तरार्धर्चस्य व्याख्याने सायणाचार्यः सूर्यस्य मनुष्यावतारत्वमेवं कथयति। "स्वश्वो नाम कश्चिद्राजा । स च पुत्रकामः सूर्यमुपासाञ्चक्रे । तस्य च सूर्य एव पुत्रो बभूव । तेन सह एतशनाम्नो महर्षेर्युद्धं जातमिति तदेतदिहोच्यते ।"

किं पर्यवसन्नम् । युद्धे स्वश्वपुत्रेण सूर्येणाक्रान्तमेतशमिन्द्रो रक्षितवान् । स्वश्वपुत्रश्च सूर्यस्य तेजोंशावतारत्वादेव सूर्य उक्तः। तस्मादेतशारिः सूर्यः सूर्यस्य तेजोंशावतारो महापुरुषः ।



Bhagavan Sri Ramana Maharshi

सप्तमं प्रकरणम्

## इन्द्रसाहाय्यकस्वरूपम्

सूर्यविजये यदिन्द्र एतशं रक्षितवान् । तत्कथम् । किं परोक्षानुग्रहवशात् । उताहो कस्माच्चित्प्रत्यक्षात् सम्बन्धात् । प्रत्यक्षः सम्बन्ध एवेति विज्ञायते । अत्रैषा भवति ।

यत्तुदत्सूर एतशं वङ्कू वातस्य पर्णिना ।
वहत्कुत्समार्जुनेयं शतक्रतुः त्सरद्गन्धर्वमस्तृतम् ।।
(ऋक्संहिता ८. १. ११ मेधातिथिमेध्यातिथी)

यत् यदा । सूरः । एतशं तन्नामकं ऋषिम् । तुदत् बाधितवान् । (तदा) शतक्रतुः इन्द्रः । वङ्कु वक्रगतिना वक्रगतिभिः । पर्णिना अश्वेन अश्वैः । बहुषु व्यत्ययेनैकवचनम् । इमा ब्रह्म बृहद्दिवो विवक्तीत्यादाविव बहुष्वेकवचनोपपत्तिः । वङ्कु इति तृतीया विभक्तेरेकवचने रूपम् । शक्ती इत्यादाविव पूर्वसवर्णदीर्घच्छान्दसः । आर्जुनेयं अर्जुनीनक्षत्रजातम् । कुत्सम् । एतशम् । एतशस्यैव कुत्स इति प्रसद्धिं नामान्तरम् । वहत् नीतवान् । अस्तृतं केनाप्यहिंसितम् । गन्धर्वं सूर्यं त्सरत् कुटिलगत्या प्रापत् । एतेन कुत्सापरपर्यायस्यैतशस्य सूर्येण सह युद्धे इन्द्रः सारथ्यं कृतवानिति गम्यते । अश्वैर्वहनं हि सारथ्यान्नातिरिच्यते ।

अत्र पूर्ववाक्यप्रकृतौ सूरैतशावेवोत्तरवाक्ययोर्गन्धर्वकुत्स-शब्दाभ्यामुच्येते । गवां किरणानां धर्ता गन्धर्वः इति सायणाचार्यस्य व्याख्यानम् । गन्धर्वशब्दो मानवजातिविशेषवाचकोऽत्रेत्यस्माकम्

अभिप्रायः । सूर्यस्य पिता स्वश्वश्च गन्धर्वजातीय इत्यनेन जानीमः । रामायणे भरतेन जिता गन्धर्वा विष्णुपुराणे नागानां मानवजातिविशेषाणां रक्षार्थं पुरुकुत्सेन जिता गन्धर्वाश्च गन्धर्वजातीयानां मनुष्याणां सद्भावे पौराणिकं निदर्शनम् ।

नन्वस्तु पूर्वप्रकृतः सूर एव गन्धर्वो गुणतो जात्या वा । कुत्सस्तु भवत्वेतशादन्य एव वीर एतशपक्षीयः । तमेव वहतु वातस्याश्वैरिन्द्र इति चेत् । तदा पराजितस्यैतशस्य पलायनाद् अनन्तरं कुत्सेन्द्रौ रथेन सूर्यं प्रत्यगच्छतामिति वक्तव्यम् । तदान्याऽनुपपत्ति। का ।

सूरश्चिद्रथं परितक्म्यायां पूर्वं करदुपरं जूजुवांसम् ।
भरच्चक्रमेतशः सं रिणाति पुरो दधत्सनिष्यति क्रतुं नः ॥

(ऋक्संहिता ५. ३१. ११ अवस्युः)

सूरः सूरस्य । षष्ठ्यर्थे प्रथमा । जूजुवांसं वेगेनापतन्तं । पूर्वमभिमुखं। रथम् । परितकम्यायां युद्धे उपरं पराङ्मुखम् । करत् अकरोत् । सूक्ते पूर्वकृत इन्द्रः कर्ता अध्याहरणीयः । चक्रं तस्य सूरस्यैव रथचक्रम् । भरत् अहरत् रथात्पृथगकरोदिति यावत् । एतशः । संरिणाति नाशयति शत्रुं सूर्यमिति प्रकरणबलादध्याहारः । इन्द्रेण सूर्यस्य रथे पराङ्मुखे कृते तद्रथचक्रे च हृते एतशस्तं सूर्यं शत्रुं जितवानित्यर्थः । (किञ्च) नः अस्माकं क्रतुं कर्म । पुरोदधत् पुरः स्थित्वा दधानः सन् अग्रणीः सन्नित्यर्थ । सनिष्यति साधयिष्यति साधत्विति यावत् । आशीरर्थे लृट् छान्दसः । प्रकृतस्यैतशस्य कर्तुरनुवृत्तिः । अत्र मन्त्रे एतशस्यैव शत्रुनाशकत्वमुच्यते । तत्कुत्सैतशयोर्भेदपक्षे नोपपद्यते ।

सायणाचार्यस्तु एतश इति चतुर्थ्यर्थे प्रथमां मन्यते । इन्द्रः एतशार्थं सूर्यरथचक्रं हृतवानिति तत्पक्षेऽर्थः । तस्मिन्नपि पक्षे कुत्सैतशयो-

रभेदस्यैव साधिकेयमृक्। कथम् । अन्यत्र ऋचि कुत्सार्थं सूर्यरथचक्रहरणस्योक्तत्वात् । यथा -

यत्रोत बाधितेभ्यश्चक्रं कुत्साय युध्यते ।
मुषाय इन्द्र सूर्यम् ।।

(ऋक्संहिता ४. ३०. ४ वामदेवः)

इन्द्र हे परमेश्वर । उत अपि च यत्र यस्मिन्युद्धे । बाधितेभ्यः शत्रुपीडितेभ्यः स्वजनेभ्यः तानुद्धर्तुमिति यावत् । युध्यते । कुत्साय सूर्यं सूरसम्बन्धि । चक्रं रथचक्रम् । मुषायः अहरः। अत्र कुत्सस्यार्थे सूर्यरथचक्रहरणं स्पष्टमुक्तम् ।

अपि च "अस्मा इदु" (ऋक्संहिता १. ६१. १५) इति प्रागुदाहृते मन्त्रे "सूर्येपस्पृधानं एतशं इन्द्रः प्रावदिति वर्तते । सूर्यं जेतुमिच्छन्तं एतशमिन्द्रो रक्षितवानिति तस्य स्पष्टभाषयाऽर्थः ।" तस्य च सूर्यैतशसङ्ग्रामे इन्द्र एतशाय जयं दत्तवानिति सरलं तात्पर्यम् । एतच्च कुत्सैतशयोरभेदपक्ष एव सङ्गच्छेत । एतशस्य पलायनं सत्यं चेत्तदेव तस्य रक्षकं वक्तव्यम् । इन्द्रस्तु एतशपक्षीयस्य कुत्सस्यैव रक्षकः । तस्मान्नास्ति कुत्स एतशाद्भिन्न इति भाव ऋचाम् । इदं च ऋगन्तरव्याख्यानावसरे उत्तरत्र भूयश्च दृढीकरिष्यामः । वेदे चारित्रिकव्यक्तीनामेकैकस्य बहूनि नामानि भवन्तीत्यत्र दिवोदासस्यातिथिग्वप्रस्तोकाश्वथादिनामदर्शनं निदर्शनम् । कुत्सापरपर्यास्यैतस्य स्वश्वपुत्रेण सूर्यावतारपुरुषेण सह युद्धे इन्द्रः सारथ्यमकरोदिति स्थितम् । अत्रेयमपरा ऋग् भवति ।

यासि कुत्सेन सरथमवस्युस्तोदो वातस्य हर्योरीशानः ।
ऋज्रा वाजं न गध्यं युयूषं कविर्यदहन्पार्याय भूषात् ।।

(ऋक्संहिता ४. १६. ११ वामदेवः)

अत्रेन्द्रस्तुतिः प्रकृता । ईशानः ईश्वरः । (त्वम्) अवस्युः रक्षकामः सन् । वातस्य वायोः । हर्योः अश्वयोः तोदः पीडकः सन् कशाघातैश्चोदकः सन्निति यावत् । सारथिः सन्निति निकृष्टं तात्पर्यम् । कुत्सेन कुत्साख्येन ऋषिणा सह । सरथं समानरथं । यासि प्राप्नोषि । ऋज्रा दीप्तौ तावश्वौ च । गध्यं ग्राह्यं गन्तव्यं शत्रुमिति यावत् । वाजं न अन्नमिव । युयूषन् युक्तवन्तः प्राप्तवन्त इत्यर्थः । कर्तृपदं द्विवचनान्तं क्रियापदं बहुवचनान्तं एषा विप्रतिपत्तिः । कर्तृपदस्य बहुवचनार्थे व्यत्ययेन द्विवचनान्तत्वं छान्दसमभिधाय परिहर्तव्या । कदा । यदहन् यस्मिन्नहनि कविः कुत्सस्य ज्येष्ठो भ्राता यमुत्तरत्र निरूपयिष्यामः । पार्याय पारणाय शत्रुतरणायेति यावत् । भूषात् प्राभवत् । तोदो हिंसकः । वातस्य हर्योरीशानः । इति सायणाचार्यस्यान्वयो विरसः । हिंसकत्वं सामान्यतः ईशानत्वं वाताश्वयोरिति द्वयमपि विसंष्ठुलम् । ईशानत्वं सामान्यतः सर्वभुवनपतित्वात् । तोदत्वं वातस्य हर्योः कुत्ससारथित्वात् । वातस्याश्वयोर्वात एव स्वामी स्यान्नेन्द्रः । ननु तर्हि वातस्याश्वौ कथं कुत्सस्य भवेताम् । कुत्सस्य प्राणांशावतारत्वादिति ब्रूमः। प्राणश्च वायोर्मुख्या विभूतिः । कुत्सस्य प्राणदेवता तेजोंशावतारत्वं चोत्तरत्र निरूपयिष्यामः ।

पश्यतान्यामृचम् । यथा भवगतः कुत्ससारथित्वं तात्पर्येणोच्यते । साक्षाच्च सूर्यचक्रहरणमुच्यते ।

वह कुत्समिन्द्र यस्मिञ्चाकन्त्स्यू ऋज्रा वातस्याश्वा ।
प्र सूरश्चक्रं वृहतादभीकेऽभि स्पृधो यासिषद्वज्रबाहुः ॥

(ऋक्संहिता १. १७४. ५ अगस्त्यः)

इन्द्र यस्मिन् चाकन् कामयमानो भवसि यस्य सखा भवसीति यावत् । (तं) कुत्सम् । स्यू मन्यू स्वामिनः सुखमिच्छद्भ्याम् । ऋज्रा दीप्ताभ्याम् ।

वातस्य वायोः । अश्वा अश्वाभ्याम् । सर्वत्र तृतीयार्थे व्यत्ययेन द्वितीया । वह अनयः भूतार्थे व्यत्ययेन लोट् । भूतार्थे लोटः प्रयोगा बहुषु स्थलेषु दृश्यन्ते छन्दसि । सारथिर्भूत्वा कुत्सं नीतवानसीति भावः । सूरः सूरस्य प्रथमा षष्ठ्यर्थे । चक्रं रथचक्रम् । अभीके समीपे (गत्वा) प्रवृहतात् हृतवानसि । प्राग्वद्भूतार्थे लोट् मध्यमपुरुषैकवचनस्यायं तातङ । वज्रबाहुः कुत्सः । स्पृधः शत्रून् अभिलक्ष्य यासिषत् गतवान् सूर्यरथचक्रजहरणादनन्तरम् इत्यर्थाल्लभ्यते।

अत्र सायणाचार्यस्य व्याख्यानमतीव विसंष्ठुलम् । तन्मतेन गृहप्राप्तं कुत्सं तदीयावश्वौ प्रतिप्रस्थापयेतीन्द्रः पूर्ववाक्ये प्रार्थ्यते । किमनेन प्रार्थनेन किं अगस्त्यस्य प्रयोजनम् । यदीन्द्रभवने कुत्सो बहूनि दिनानि तिष्ठेदगस्त्यस्य किं हीयेत । एवं विसंष्ठुलया विधया व्याकुर्वाणोऽपि वातस्याश्वौ कुत्सस्येत्यङ्गीकृतवान् । तदेकं भद्रं चक्रे । यासि कुत्सेनेति मन्त्रे वातस्य हर्योरिन्द्र ईशान उक्तः । सारथित्वा-दीशानत्वमिति चेत् तत् प्रियं नः ।

यस्मिञ्चाकन्निति यच्छब्दवाक्यं सन्निकृष्टेन पूर्वार्धर्चस्थवाक्येना-संयोज्य तृतीयपादस्थवाक्येन सह स विद्वान्योजितवान् । तन्मतेन तद्वाक्यस्यायमर्थः । "यस्मिन् हविषि निमित्तभूते सति कुत्सं चाकन् कामयसे तर्पयसे वा हविरादिकं तदर्थं सूरः प्रेरकः सूर्यः चक्रं खमण्डलं स्वरथचक्रं वा अभीके आसन्नदेशे प्रवृहतात् ऊर्ध्वं गमयतु प्रकाशयतु ।" कुत्सस्येन्द्राय हविर्दातुं प्रातः कालोऽपेक्षितः । तस्मात्त्वमुदितो भवेति सूर्यमगस्त्यः प्रार्थयते इति सायणाचार्यस्य मतेन तस्य वाक्यस्य तात्पर्यम् । अत्राक्षन्तत्यो दूरान्वयः वाक्यस्वभावविरुद्धा अध्याहाराः अन्ततः कुत्सहविर्दानार्थमेव सूर्योदयप्रार्थना तत्र चोदये

आसन्नदेशसम्बन्धः प्रकृतानुपयोगी चेति सर्वं विसंष्ठुलम् ।
"प्र सूरश्चक्रं वृहतादभीके" । (ऋक्संहिता ४. १६. १२ वामदेवः) ।

इति मन्त्रान्तरस्योदाहृतमन्त्रपादतुल्ये पादे कुत्सप्रकरणस्थे सायणाचार्यस्य व्याख्यानं चात्र लक्षीकर्तव्यं भवति । "तथा सूरः प्रेरकस्य सूर्यस्य चक्रमायुधं अभीके समीपे सङ्ग्रामे वा प्रवृहतात् प्रकर्षेण च्छिन्नवानसि ।" चक्रशब्दार्थे मतभेदेऽपि सोऽयमर्थः प्रकरणानुरूपः । अत्र लोटो भूतार्थे वृत्तिमाचार्यः शिश्रिये। "यत्रोत बाधितेभ्यश्चक्रं कुत्सायेति" मन्त्रे "सूर्यं सूरसम्बन्धिचक्रं मुषायः अमुष्णाः अपहृतवानसि" इति व्याख्यातवान् । तत्र चक्रं रथचक्रं वा आयुधं वेति न स्पष्टीकृतवान् । पूर्वव्याख्यानुसारेणात्र चक्रमापयुधम् एव यद्युच्येत तदानीमन्यो विरोधः । एकत्र चक्रस्य च्छेदः अन्यत्रापहरणम् इति । रथचक्रार्थवादिनामस्माकं मते तु अपहरणं च रथापृथक्ककरणम् । आयुधार्थवादिना त्वपहरणं बलादाच्छिद्य सयत्तीकरणं वक्तयं चौर्यं वा । उभयमपि च्छेदलक्षणम् । सूरश्चिद्रथमिति प्रागुदाहृते मन्त्रे भरच्चक्रमिति वाक्यं स विद्वानेवं व्याख्यातवान् । "पूर्वं द्विचक्रस्य रथस्यैकं चक्रं भरत् अपहरत्।" अत्र व्याख्याने यद्यपि चक्रं रथचक्रमङ्गीकृतवांस्तथापि पूर्वं स्वोक्तां स्वश्वपुत्रकथां विस्मृत्य साक्षात्सूर्येण सह युद्धमेतशस्य द्योतयति । यत्सप्त युञ्जन्ति रथमेकचक्रमित्यादौ सर्यूस्यैकचक्ररथवत्त्वं कुत्सयुद्धादनन्तरमेवेति मन्यते । पूर्वं द्विचक्रस्येत्युक्तिस्तमभिप्रायं ध्वनति । इदं कण्ठोक्त्याचोक्तवानन्यत्र व्याख्यानसन्दर्भे -

"दश प्रपित्वे अध सूर्यस्य मुषायश्चक्रमविवे रपांसि ।।"

(ऋक्संहिता ६. ३१. ३ सुहोत्रः)

अस्यार्धर्चस्य तदीयं व्याख्यानमेवम् । "अध अपि च प्रपित्वे प्रपतने युद्धे सूर्यस्य चक्रं रथावयवभूतं मुषायः अमुष्णाः । तदा प्रभृति सूर्यस्य

रथ एकचक्रोऽभूत् । तथा चाप्रातं सप्तयुञ्जन्ति रथमेकचक्रमिति । एतशाख्यस्य ऋषेः सूर्येण सह युद्धे तत्साहाय्यार्थमागत इन्द्रः सूर्यस्य चक्रमपहृतवानित्याख्यानम् । सूरश्चक्रं प्रवृहज्जात ओजसेति निगमान्तरम् । अपि च रपांसि पापकारीणि रक्षःप्रभृतीनि अविवेः अस्माल्लोकादगमयः अवधीरित्यर्थः ।'' दशेति पूर्वार्धर्च सङ्गतं पदम् ।

अत्र व्याख्याने सायणाचार्येण स्वोक्तं कथादृढीकरणाय यन्निगमान्तरमुदाहृत तस्य तदीयं व्याख्यानं पश्यत ।

''सूरश्चक्रं प्रवृहज्जात ओजसा ।''

(ऋक्संहिता १. १३०. ९ परुच्छेपः)

(इदं मन्त्रस्याद्यप्रतीकस्थं वाक्यम्) ।''अत्रापीतिहासमाचक्षते । केचनासुराः पूर्वमिन्द्रवज्रेण वधो मा भूदिति ब्रह्मणो वरं लब्ध्वा इन्द्रमगणयित्वोद्वृत्ता आसन् । तान् हन्तुमिन्द्रः सूर्यस्य रथचक्रमादायावधीदिति । तदिदमुच्यते । अयमिन्द्रः सूरः सूर्यस्य षष्ठ्यर्थे प्रथमा । चक्रं रथस्य चक्रमादाय ओजसा शरीरेण बलेन जातः प्रवृद्धः सन् प्रवृहत् प्रक्षिप्तवान् ।'' पश्यतोदाहृतनिगमान्तरव्याख्यानसौभाग्यम् । प्रतित्वे अध सूर्यस्य मुषायश्चक्रमिति वाक्ये व्याख्याता कथाऽन्या । तदुपबृंहणार्थम् उदाहृतस्य निगमान्तरस्य व्याख्याता कथाऽन्या । पुर्वत्र सूर्येण सहैव युद्धे चक्रस्य हरणम् ।

सूर्यरथचक्रहरणसन्दर्भस्थोऽन्योऽर्धर्च एवं व्याख्यातस्तेन व्याख्यात्रा ।

''अयं चक्रमिषणत्सूर्यस्य न्येतशं रीरमत्ससृमाणम् ।''

(ऋक्संहिता ४. १७. १४ वामदेवः)

प्रैतशं सूर्ये पस्पृधानमित्यर्धर्चे पूर्वं काचिदाख्यायिका सूचिता । अत्राप्ययं

चक्रमिति पूर्वार्धे सा सूच्यते । स्वश्वनामा कश्चिद्राजा । स च पुत्रार्थं सूर्यमुपास्ते । स च सूर्यः पुत्ररूपेण स्वयमेव तत्रोत्पन्नः स्यात् । एतशाख्येन महर्षिणा सार्धं युद्धं चकार । तदानीमृषिर्युद्धे जयार्थमिन्द्रं तुष्टाव । स इन्द्रस्तेन स्तूयमानः सन् स्वश्वपुत्रस्य सूर्यस्य सङ्ग्रामादेव पालयदिति । अयमिन्द्रः सूर्यस्य चक्रमायुधं इषणत् प्रेरयत् । ससृमाणं युद्धार्थं सरन्तं गच्छन्तं एतशनामानमृषिं न्यरीरमत् निवारितवान् ।''

अत्र साक्षात्सूर्येण युद्धं न कथ्यते । न च पूर्वं द्विचक्रस्य तद्रथस्यैकचक्र-हरणं वर्ण्यते । अत्रैतशेन युद्धकृत्स्वश्वपुत्रः सूर्यः । चक्रं च तस्यायुधविशेषः ।

इदानीमवगताः स्युः सायणाचार्यस्य व्याख्याने परस्परविरोधाः । यद्येक एव व्याख्यानकृदीदृशाः परस्परविरोधा न भवेयुः । कस्मिंश्चिदर्थे आत्मनोदाहृतो मन्त्रोऽपि व्याख्याने तमर्थं न बोधयति । तस्माद् अस्माभिरनुमीयते अमात्यसायणो बहुभिः पण्डितैः ऋग्वेद-भाष्यमकारयत् । ते च स्व स्वमत्यनुसारेण महामन्त्रिण आज्ञां शिरसा वहन्तो यथा कथञ्चिद्भाष्यं समापितवन्तः । व्याख्यातॄणां बहुत्वादेव परस्परविरोधाः । बहुलराजकीयकार्यव्यग्रः सायणोऽप्यन्ततस्त-च्छोधयितुं कृतक्षणो नाभूत् ।

प्रकृतमनुसरामः । सर्वत्रापि इन्द्रः स्वश्वपुत्रस्य सूर्यस्य रथचक्रं रथात्पृथगकरोदित्येवार्थः कर्तव्यः । युद्धं च तस्य कुत्सापरपर्यायेणैतशेन । इन्द्रश्च तस्मिन्युद्धे कुत्सस्य सारथिः ।

अष्टमं प्रकरणम्

## शुष्ण एव स्वश्वपुत्रः सूर्यः

सूर्यस्य शोषिकाशक्तिरेक विद्यते । सा त्वासुरी । सोऽयं शोषकः सौरांशो निगमेषु शुष्ण इत्युच्यते । तदंशसम्बन्धात् सूर्योऽपि शुष्णः। “शुष्णस्य चिद्व्रन्दिनो रोरुवद्वना”। (ऋक्संहिता १. ५४. ५) इति सूर्यपरतया शुष्णपदस्य प्रयोगः । अंशांशिनोरभेदाद्यथा रविः शुष्ण उच्यते तथा शुष्णोऽपि रविरुच्यते । तस्य शुष्णस्यायं तेजोंशावतारः स्वश्वस्य पुत्रः । तस्मादस्य दिव्यविभूतेरप्यासुरी प्रकृतिरविरुद्धा । किं प्रमाणं स्वश्वपुत्रः सूर्यः शुष्ण इत्यत्रेति चेत् । पश्यतेमामृचम् ।

मुषाय सूर्यं कवे चक्रमीशान ओजसा ।
वह शुष्णाय वधं कुत्सं वातस्याश्वैः ।।

(ऋक्संहिता १. १७५. ४. अगस्त्यः)

कवे हे सर्वज्ञ इन्द्र । ओजसा अन्तःसारेण । ईशानः महासमर्थः। त्वं सूर्यं सूरसम्बन्धि । चक्रं रथचक्रम् । मुषाय अमुष्णाः रथात् पृथगकरोरित्यर्थः । (किञ्च) शुष्णाय शोषकाय तस्मै सूर्याय । वधं हन्तारम् । कुत्सं तन्नामकमृषिं । वातस्य । अश्वैः । वह अवहः अनयः । शुष्णं हन्तुमश्वै कुत्समनय इत्यर्थः । अत्र पूर्वार्धे चक्रहरणकथालिङ्गाद्-उत्तरार्धे वाताश्वैर्वहनाल्लिङ्गाच्चेयमृक्सूर्यकुत्ससङ्ग्रामप्रकरणस्थेत्यत्र न कश्चित्संशयः । तस्मात्पूर्वप्रकृतः सूर्य एवात्र शुष्ण कुत्सैतशयोः सूर्यशुष्णयोश्चाभेदमविजानतो वेदार्थप्रकाशकारस्य स्वपूर्वोक्तविरुद्धं यथेष्टाध्याहारयुक्तं सविकल्पं व्याख्यानम् अत्रोपेक्ष्यम् । शुष्णाय वधं

हन्तृ शस्त्रं वह प्रयुङ्क्ष्व । अनन्तरं तं हत्वा कुत्सं वातस्याश्वैर्वातवेगैर्हतस्य शुष्णस्याश्वैः संयोजयेति तन्मतेनार्थः । पूर्वोत्तरार्धयोर्नास्ति सम्बन्धः । यद्वा शुष्णं हन्तुं कर्ता न साधनम् । शस्त्रं गृहीत्वा वाताश्वैर्गच्छेति तात्पर्यम् । अत्रापि पूर्वोत्तरार्धयोर्यथापूर्वं सम्बन्धाभावः । सति सम्भवे सम्बन्धो न्याय्यः । सूर्यकुत्ससङ्ग्रामस्यान्यत्रोक्तत्वात् उत्तरार्धे कुत्सप्रस्तावस्य विद्यमानत्वादस्ति सम्बन्धभवः । पूर्वार्धे हि कुत्सप्रकरणद्योतकं सूर्यरथचक्रहरणं वर्णितम् । "यत्रोत बाधितेभ्यश्चक्रं कुत्साये"ति निगमान्तरो हि सूर्यरथचक्रहरणं कुत्सार्थं दर्शितम् । इमे च द्वे ऋचावत्र भवतः ।

उशना यत्सहस्यैरयातं गृहमिन्द्र जूजुवानेभिरश्वैः ।
वन्वानो अत्र सरथं ययाथ कुत्सेन देवैरवनोर्ह शुष्णम् ॥
(ऋक्संहिता ५. २९. ९ गौरवीतिः)

इन्द्र । यत् यदा । सहस्यैः अभिभवनशक्तिमद्भिः जूजुवानैः शीघ्रगमनैः । अश्वैः ।(त्वम्) उशना एतन्नामकऋषिश्च । गृहं प्रकरणात् कुत्सगृहम् । अयातम् । अत्र अस्मिन्काले वन्वानः कुत्सेन याच्यमानः । कुत्सेन तन्नामकेन ऋषिणा सह । सरथं समानमेकं रथम् । ययाथ जगन्थ । देवैः स्वानुचरैर्मरुद्भिः सह मरुदवतारपुरुषा एवात्र ऋषेर्हृदयस्थाः । शुष्णं शोषकं प्रतिवीरम् । अवनोर्ह प्रापः खलु । अत्र युद्धाय कुत्सेन सहैकरथस्य भगवतः शुष्णं प्रति प्रस्थानमभिहितम् । प्रकरणाविच्छेदेनोत्तरस्यामनन्तरं चरित्रमुच्यते ।

प्रान्यच्चक्रमवृहः सूर्यस्य कुत्सयान्यद्वरिवो यातवेऽकः ।
अनासो दस्यूरमृणो वधेन नि दुर्योण आवृणङ् मृध्रवाचः ॥
(ऋक्संहिता ५. २९. १० गौरवीतिः)

(हे इन्द्र) सूर्यस्य । अन्यत् एकम् । चक्रं रथचक्रम् । प्रावृहः रथात्पृथगकरोः । अन्यत् इतरम् । चक्रम् । कुत्साय । वरिवः धनम् ।

यातवे यातुम् । रणकार्योपयोगायेति भावः । रणेन हि धमं प्राप्यते । अकः अकरोः । यत् पृथक्कृतं तद्विच्छिद्यैव पृथक्कृतमिति न तद्रणकार्योपयुक्तं भवेत् । अन्यदेवाविच्छिन्नमुपयोक्तुमर्हमिति तथोक्तिः । एकं चक्रं च्छिन्नमन्यच्चक्रं कुत्सायायत्तीकृममिति भावः । सूर्यरथचक्रस्य रणोपयोगं चोत्तरत्र निरूपयिष्यामः द्वितीयचक्रस्य कुत्सायात्तीकरणात् सूर्यविजयोऽनुक्तोऽपि गम्यते । तस्मिन्नविजिते कथं तच्चक्रं शत्रोर्वशे स्यात् । उतेन कुत्स एतशश्च न द्वाविति प्रागुक्तं स्थिरीकृतम् । यदि कुत्सो नैतशैः स्यात् कथमेतशार्थमेव जितस्य सूर्यस्य रथचक्रं कुत्साय वशीक्रियेत। अपि चैतेन पूर्वं द्विचक्रस्य सूर्यरथस्यैतशयुद्धे चक्रमेकम् अपहृतमिन्द्रेण ततः प्रभृति सूर्यरथ एकचक्रोऽभूदिति सायणभाष्यैक-देशमतं प्रत्युक्तं भवति । एतदर्धर्चतात्पर्यपर्यालोचने सूर्यस्यैकमपि रथचक्रं न परिशिष्टम्। एकं भग्नम् । अन्यत्कुत्सायायत्तीकृतम् । अयं च सूर्यः सूर्यावतारपुरुषः स्वश्वपुत्रः । न साक्षात्सूर्य इति विषयः पाठकैर्न विस्मर्तव्यः । तस्मिन् युद्धे सूर्यस्य चक्रायुधं छिन्नमिन्द्रेणेति तद्भाष्यैकदेशमतं चानेन परास्तम् । चक्रद्वयोक्तितो रथचक्रयोरेव स्फुटप्रतीतेः । पर्वूमन्त्रप्रकृतः शुष्ण एवायं सूर्यः प्रकरणैक्यात् ।

अथोत्तरार्धर्चस्यार्थः । दस्यून् शुष्णानुचरान् वधेन हन्त्रा कुत्सेन द्वारा । अनासः आस्यरहितान् । छिन्नशीर्षानिति यावत् । विधेयविशेषणमिदम् अमृणः अघातयः अन्तर्भावितणिच्कः प्रयोगः छान्दसः ।(किञ्च) मृध्रवाचः हिंसकवाचः शत्रून् दुर्योणे दुर्गस्याने । न्यावृणक् अघातयः । अत्र दुर्योणस्थानलिङ्गाङमृध्रवाग्गुणलिङ्गाच्चैते कुत्सशात्रवः कुयव स्तदनुचराश्चेति गम्यते । कुयवागेव हि वर्णलोपात्कुयवः । तस्य स्थानं दुर्योधम् । तत्कुयवप्रकरणे निरूपयिष्यामः ।

इतश्च शुष्ण एव स्वश्वपुत्रः सूर्यः। त्वं कुत्सेनाभिशुष्णमिन्द्र अशुषं युध्य कुयवं गविष्टौ।

दश प्रपित्वे अध सूर्यस्य मुषायश्चक्रमविवे रपांसि ।।

(ऋक्संहिता ६. ३१. ३ सुहोत्रः)

इन्द्र। अशुषं शोषयितुमशक्यम् । शुष्णम् कुयवं कुयवनामकं च । गविष्टौ गौर्भूमिरिष्यतेऽस्यामिति गविष्टः भूम्यार्था आजिः । तस्याम् । दशदशदिनानि। कुत्सेन कुत्सर्षिणा द्वारा अभियुध्य अभ्ययोधयः अत्राप्यन्तर्भावितणिच्कः प्रयोगः अध एकादशेऽहनि । प्रपित्वे समीपे (गत्वा) सूर्यस्य पूर्वप्रकृतस्य शुष्णस्य । चक्रं रथचक्रम् । मुषायः अपाहरः रथात्पृथगकरोरित्यर्थः । रपांसि पापकारीणि रक्षांसि । अविवेः दूरीकृतवानसि । अत्रापि पूर्वार्धर्चप्रकृतयोः शुष्णकुयवयोरन्यतरः सूर्यो वक्तव्यः । शुष्ण एव निगमान्तरबलादवयवार्थतश्च सूर्य इति सुवचम् । अस्य च शुष्णस्याशुष इति नामान्तरमस्तीति वाचकैर्न विस्मर्तव्यम् । अदृष्टवशात्सायणः शुष्णाशुषौ न पृथक्कृतवान् । एतं शुष्णसूर्ययोरभेदमुत्तरत्रापि दृढीकरिष्यामः।

नवमं प्रकरणम्

## सुश्रवास्तूर्वयाणः कः

वैदिकसाङ्ग्रामिकेतिहासेषु प्राधान्येन पञ्चवीराः सुप्रसिद्धाः । पैजवनः सुदाः, अतिथिग्वोदिवोदासः, वैर्दाथनऋजिश्वा, आङ्गिरसः कुत्सः, सुश्रवास्तूर्वयाणश्चेति । दाशराज्ञयुद्धनायकः सुदाः । शाम्बरयुद्धनायको दिवोदासः । पैप्रवयुद्धनायकऋजिश्वा । शुष्णकुयवयुद्धनायकः कुत्सः । विंशतिजनराजयुद्धनायकः सुश्रवास्तूर्वयाणः । एतेषु सुश्रवास्तूर्वयाणः क इति चिन्त्यते । तूर्वं यानं यस्य सः तूर्वयाणः । उर्वी तुर्वी थुर्वी दुर्वी धुर्वी हिंसार्थाः इति हिंसार्थात्तुर्वीधातोर्व्युत्पन्नोऽयं तूर्वशब्दः । यानं च रथोऽश्वो गजो वा। प्रकृते रथो ग्राह्यः । कारणमुत्तरत्र स्पष्टं भवेत् । शत्रुहिंसकरथ इति तूर्वयाणशब्दस्यार्थः । सुश्रवा इति नाम । अस्य विंशतिजनराजयुद्धाभिधायिकेयमृग्भवति ।

त्वमेताञ्जनराज्ञो द्विर्दश
अबन्धुना सुश्रवसोपजग्मुषः ।
षष्टिं सहस्रा नवतिं नव श्रुतो
नि चक्रेण रथ्या दुष्पदाऽवृणक् ॥

ऋक्संहिता १. ५३. ९ सव्यः

इन्द्र। श्रुतः प्रख्यातः। (त्वम्) अबन्धुना सहायरहितेन। सुश्रवसा तन्नामकेन राज्ञासह । उपजग्मुषः युद्धार्थमुपगतवतः। द्विर्दश विंशतिसङ्ख्याकान्। जनराज्ञः राक्षसेश्वरान्। षष्टिं सहस्रा षष्टिसहस्रसङ्ख्याकांस्तदीयसैनिकान् । नवतिं नवतिसङ्ख्याकान्

दलपतीन्। नव नव सङ्ख्याकांत्सेनापतींश्च। रथ्या रथसम्बन्धिना। दुष्पदा दुष्टपादेन चक्रेण । द्विवचनार्थ एकवचनं व्यत्यये। न्यवृणक् अनाशयः। रथचक्राभ्यां शत्रून् चूर्णय इति भावः। अयं च भयङ्करो रथः सुश्रवस एव भवति। अत एव स उत्तरस्यामृचि तूर्वयाण उच्यते। शत्रुषु रथस्य चालयिता च सुश्रवा एव। तथापि रथाधिष्ठातृ अस्त्रात्मकं ब्रह्मैन्द्रं भवति। तस्मादेतद्विंशतिजनराजवधकर्माद्भुतमैन्द्रं वर्ण्यते ।

अत्रैषा भवति ।

त्वा युजा नि खिदत्सूर्यस्य
इन्द्रश्चक्रं सहसा सद्य इन्दो ।
अधि ष्णुना बृहता वर्तमानं
महो द्रुहो अप विश्वायु धायि ॥

ऋक्संहिता ४. २८. २ वामदेवः

इन्द्र हे सोम। त्वा त्वया। युजा सहायेन त्वत्पानप्रवृद्धबल इत्यर्थ। इन्द्रः। सहसा शक्त्या। सद्यस्तत्क्षणे। अधिष्णुना अधिष्ठात्रा। बृहता अस्त्ररूपबृहत्साम्ना। वर्तमानं चरत्। सूर्यस्यैतशशत्रोः स्वश्वपुत्रस्य चक्रं रथचक्रम्। निखिदत् प्रभज्यापातयत्। (तदानीं) महो द्रुहः महतो द्रुङनामकस्य कुयवपितुः। विश्वायु सर्वबलं। अपधायि अपहृतम् ।

सायणाचार्यस्तु बृहता वर्तमानमित्यस्यान्तरिक्षेण चरदित्यर्थं कृतवान्। तच्च स्वश्वपुत्रसूर्यप्रकरणविरुद्धत्वाच्चिन्त्यं व्याख्यानम्। तन्मतेन महो द्रुह इत्यस्य महतो द्रोग्धुः सूर्यस्येत्यर्थः। साक्षात्सूर्यो निखिलर्षिपूजितो महान्द्रोही ऋषिणोच्यत इत्याश्चर्यम्। द्रुगाह्वयः। कुयवपितैवात्रोच्यते । तस्य द्रुगाह्वयत्वं चोत्तरत्र प्रदर्शयिष्यामः। युद्धं चैतत्कुयवकुत्साग्रजयो-र्भूमिनिमित्तम्। कुयवस्य सहायो योद्धा महावीरः शुष्णापरपर्यायः स्वश्वपुत्रः सूर्यः । तस्य पराजये कुयवस्य पराजयोऽपि सिद्ध इति

तत्पितुः पुत्रजयकाङ्क्षिणः शुष्णपराजये सर्वं बलं गतमित्युक्तिः सङ्गतैव भवति। स्वश्वपुत्रः सूर्य एव शुष्ण इति पूर्वस्मिन्प्रकरणे स्थापितम् । अन्येन लिङ्गेन चेदं दृढीभवति ।

महो द्रुहो अप विश्वायु धायि वज्रस्य यत्पतने पादि शुष्णः ॥

ऋक्संहिता ६. २०. ५. भरद्वाजः

इत्यर्धर्चे निगमान्तरे प्रथमः पाद उदाहृतपूर्वमन्त्रचतुर्थचरणतुल्योऽर्थतः शब्दतश्च । तत्सूर्यप्रकरणम् । इदं शुष्णप्रकरणम् । सूर्यशुष्णयोरभेदे ऋचोः पादैक्यमुपपन्नतरं भवति । ननु सूर्यशुष्णौ भिन्नावेव कुत्सशत्रू । तस्मादुभयोरपि पराजये तुल्यं द्रुहो निःशेषबलक्षपणमिति चेन्नैषा युक्तिः । अन्यतरस्य शेषत्वेऽपि जयप्रत्याशायाः सम्भवात् । कुत्सशत्रोः शुष्णस्यैव प्राधान्येन निगमेषु प्रसिद्धत्वाच्च ।

प्रकृतमनुसरामः । स्वश्वपुत्रस्यास्त्रशक्त्युपाधिभूतो रथ एव भार्गवास्त्रमुच्यते । भार्गवशब्दो रथपर्यायो गुप्तभाषायाम् ।
यथा-

एतं वां स्तोममश्विनावकर्म अतक्षामभृगवो न रथम् ॥

ऋक्संहिता १०. ३९. १४ घोषा

अश्विनौ हे नासत्यौ । एतम् । वां युवयोः । स्तोमं स्तोत्रम् । अकर्म अकरवाम। न यथा सादृश्यार्थकोऽयं नशब्दः । भृगवः रथकाराः । रथम् । अतक्षाम तक्षन्ति । उपमेयसमपुरुषत्वं छान्दसम् । व्यत्ययेन लडर्थे लङ। अत्र भृगुशब्दो रथशिल्पिपरतया प्रयुक्तः । भृगुणां इदं कर्म भार्गवं रथः । तदेवास्त्रं भार्गवास्त्रम् ।

किं पर्यवसन्नम् । शत्रुविनाशकरथः सौवश्व्यः सूर्य एव सुश्रवास्तूर्वयाणः । अत्रेदमन्यल्लिङ्गं भवति।

त्वमाविथ सुश्रवसं तवोतिभि-
स्तव त्रामभिरिन्द्र तूर्वयाणम् ।
त्वमस्मै कुत्समतिथिग्वमायुं
महे राज्ञे यूने अरन्धनायः ॥

ऋक्संहिता १. ५३. १० सव्यः

इन्द्र। त्वम् । तूर्वयाणं शत्रुहिंसकरथम् । सुश्रवसं एतन्नामकम् । तव। ऊतिभिः रक्षणैः । तव त्रामभिस्त्रायकैर्बलैश्च। आविथ अरक्षः। त्वं महे महते। यूने युवकाय। राज्ञे सुश्रवसे। कुत्सम् । आयुम्। अतिथिग्वं (च)। अरन्धनायः वशीकृतवानसि। अतिथिगोः पुत्रत्वाद्दिवोदासोऽतिथिग्व एच्यते । तवानुग्रहात् तूर्वयाणः सुश्रवाः कुत्सायुदिवोदासान् जितवानित्यर्थः । अत्र सायणः सुश्रवस्तूर्वयाणौ पृथग्व्यक्तीकृत्वा व्याख्यातवान् । उत्तरार्धे तु वीरत्रय जेतारं सुश्रवसमेवाङ्गीकरोति। यदि सुश्रवसस्तूर्वयाणोऽन्यः कथमस्मै इति पदं प्रत्यासन्नं तूर्वयाणं विहाय सुश्रवसमभिदध्यात् । तस्माच्चिन्त्यं तद्व्याख्यानम् । अत्र सुश्रवसः शुत्रुषु कुत्सोऽन्यतमः । शुष्णस्य च कुत्सः शत्रुः। एकदा सुश्रवसा जितः तं जेतुं कुत्सः पुनर्यत्नं स्पर्धमानश्चकारेत्युपपन्नतरं भवति । तदिदं लिङ्गं शुष्णसुश्रवसोरभेदे।

तूर्वयाणपदं न केवलं सुश्रवसो गुणकृतं विशेषणम् । अपि तु यौगिकं नामान्तरं च भवति । पश्यतैतामृचम् । यत्र तूर्वयाणपदेनैव सुश्रवा उच्यते ।

प्र तत्ते अद्या करणं कृतं भूत्
कुत्सं यदायुमतिथिग्वमस्मै ।
पुरु सहस्रा नि शिशा अभि क्षा-
मुत्तूर्वयाणं धृषता निनेथ ॥

ऋक्संहिता ६. १८. १३ भरद्वाजः

(हे इन्द्र) अद्याते तव । तत्करणं तत्कर्म। प्रभूत् प्रभवति। यच्छब्दवाक्येन तत्कर्म विशिष्यते । मत् । कुत्सम् । आयुम् । अतिथिग्वं च । अस्मै वक्ष्यमाणाय तूर्वयाणाय वशीकृतवानसीति शेषः । पुरु सहस्रा बहूनि सहस्राणि सैन्यानां कुत्सादीनामिति सन्निकर्षात्प्रतीतिः । क्षां पृथिवीम् । अभिनिशिशाः अपातय इत्यर्थः। धृषता धर्षकेण निजेन वीर्येण । तूर्वयाणं शत्रूहिंसकरथं सुश्रवसम् । उन्निनेथ उदनयः । उन्नतमकरोरित्यर्थः । कुत्साऽवतिथिग्वजयादयं तूर्वयाणः सुश्रवा एवेति सिध्यति ।

सूश्रवसं तूर्वयाणमजानतः स्वोक्तं तूर्वयाणं पृथग्व्यक्तिं च विस्मरतः सायणस्य व्यख्यानमत्रोपेक्ष्यम्। तस्य मतेनात्र तूर्वयाणस्त्वरितगमन-रथवत्त्वायोगाच्छम्बरासुरः। शम्बरस्त्वरितगमनरथ इति न क्वाप्यस्ति निगमेषु प्रसिद्धिः ।

कुत्साऽवतिथिग्वानां सम्बन्धिनो बहून् वीरानिन्द्रो घातितवा-नित्यत्रान्यच्चास्ति प्रमाणम् ।

अध्वर्यवो यः शतमा सहस्रं
भूम्या उपस्थेऽवपज्जधन्वान् ।
कुत्सस्यायोरतिथिग्वस्यवीरा
न्न्यावृणग्भरता सोममस्मै ॥

ऋक्संहिता २. १४. ७ गृत्समदः

हे अध्वर्यवः । य इन्द्रः । कुत्सस्यायोरतिथिग्वस्यवीरान् । शतं सहस्रं लक्षसङ्ख्याकान् । जघन्वान् घातयन् । भूम्याः उपसथे तले । उवपत् पातयामासेत्यर्थः। अपि च न्यावृणक् मारितवान्। अस्मै इन्द्राय। सोमम् । भरत। सर्वेष्वप्यसुरवधेषु भक्तैः कारितेष्वपि ऋषिभिः

सङ्ग्रामाभिमानी देव इन्द्र एव कर्तोच्यते। तस्मात्तादृशेषु क्रियापदानि अन्तर्भावितणिच्कानि ज्ञेयानि। लक्षणापेक्षया तस्यैव लाघवात्। अस्यामृचि सायणः कुत्सस्यायोरतिथिग्वस्य वीरानित्यत्र मध्ये प्रतिद्वन्द्विन इत्यध्याहृत्य व्यख्यातवान्। कुत्सादीनां त्रयाणां मिलित्वैकत्र कीर्तनात्सुश्रवोयुद्धमेवात्र स्मार्यते। तस्मान्नाध्याहारः क्रमविरुद्धः कर्तव्यः। सुश्रवो युद्धे कुत्सादीनां जितत्वान्न चार्थविरोधः।

योऽयं प्रसिद्धान्कुत्समायुं दिवोदासं च जितवान्, विंशतिं राक्षसेश्वरांश्च हतवान् स सुश्रवास्तूर्वयाणः कः? स्वश्वपुत्रः सूर्य एवायं नामतः सुश्रवाः। शत्रुहिंसकभयङ्कररथवत्त्वात्तूर्वयाणः। सुश्रवा इत्यत्र व्युत्पत्तिस्तु शोभने श्रवसी कर्णौ यस्य स सुश्रवाः।

स्वश्वपुत्रस्य भयङ्कररथवत्त्वादेवेन्द्रस्य तद्रथचभञ्जनमद्भुतं कर्मोच्यते। पश्यतात्रान्यामृचम्।

त्वं पुरं चरिष्णवं वधैः शुष्णस्य सम्पिणक् ।
त्वं भा अनुचरो अध द्विता यदिन्द्र हव्यो भुवः ॥

ऋक्संहिता ८. १. २८ मेधातिथिमेध्यातिथी

हे इन्द्र । यत् यस्मात्कारणात् । भाः प्रकाशमानस्त्वम् । शुष्णस्य । चरिष्णवं चरणशीलम् । पुरं दुर्गम् । रथ एवात्र शत्रुभिरभेद्यत्वाच्चरणशीलं दुर्गमित्युच्यते सादृश्यात् । वधैः प्रहरणैः । संपिणक् व्यचूर्णयः । अध अनन्तरं । अनुचरः तवानुयायी कुत्सः । द्विता द्विविधान् शत्रून् । शुष्णं तदनुचरान् कुयवं तदनुचरांश्चेत्यर्थः। हतवानिति शेषः । (तस्मात्) त्वं हव्यः। भुवः अभवः ।

कुत्सस्य द्विविधशत्रुनाशनेऽन्येयभृग्भवति ।

तदिन्द्राव आ भर येना दंसिष्ठ कृत्वने ।
द्विता कुत्साय शिश्नथो नि चोदय ॥

ऋक्संहिता ८. २४. २५ विश्वमनाः

दंसिष्ठ शत्रुनाशक । हे इन्द्र। येन रक्षणेन । कृत्वने त्वदीयमाराधनं कुर्वते। कुत्साय। द्विता द्विविधानरीन् । शिश्नाथः अहिंसीः । अपि च निचोदय कुत्सं प्रेरितवानसि। भूतार्थे लोट् । तदवः रक्षणम् । आभर । अस्मभ्यमिति शेषः ।

प्रकृतमनुसरामः । इतश्च शुष्ण एव सुश्रवास्तूर्वयाणः ।

अजावृत इन्द्र शूरपत्नीर्द्यां च येभिः पुरुहूत नूनम् ।
रक्षो अग्निमशुषं तूर्वयाणं सिंहो न दमे अपांसि वस्तोः ॥

ऋक्संहिता १. १७४. ३ अगस्त्यो मैत्रावरुणिः

हे पुरुहूत । येभिः याभिः सेनाभिः । छान्दसो लिङ्गव्यत्ययः । नूनं निश्चयेन । द्यां च आकाशं च । शूरा (ताः) वृतः आवृण्वतीः । शूरपत्नीः शूरा पतयो यासां ताः शूरपत्न्यः सेनोः । ताः हे इन्द्र अज अगच्छः । अग्निं अग्निसदृशमग्रेसरं वा । तूर्वयाणं शत्रुहिंसकरथम् । अशुषं शुष्णम् । दमे स्वकीये गृहे । अपांसि कर्माणि । वस्तोः कर्तुम् । सिंहे न सिंह इव । रक्षो अरक्षः । कुत्सादिभिर्जनराजविंशत्या वा सुश्रवसो युद्धे भगवता कृतं रक्षणमेवात्र वर्ण्यते । अशुरूष-तूर्वयाण-शब्दयोर्विशिष्टामन्यत्र निगमेषु प्रयोगविधामलक्षीं कुर्वतः सायणस्म क्लिष्टं व्याख्यानमत्रोपेक्ष्यम् । आशोषयिता आशुषः आशुष एव किल अशुषः । तूर्णगमनः किल तूर्वयाणः । तूर्णगमनस्तुरयाण एव स्यान्न तूर्वयाणः । "वृत्रं यदिन्द्र तूर्वसि।" (ऋक्संहिता ८. ९९. ६) इत्यादयः प्रयोगाः ऋचां हिंसार्थे तूर्वधातोरभ्यासं दर्शयन्ति । अशुषशब्दः पूर्णायां संहितायां शुष्णपरतयैव प्रयुज्यते।

त्वं कुत्सेनाभि शुष्णमिन्द्राऽशुषम् ।। ऋक्संहिता ६. ३१. ३
इन्द्रो यः शुष्णमशुषं न्यावृणक् ।। ऋक्संहिता १. १०१. २
कुत्साय शुष्णमशुषं नि बर्हीः ।। ऋक्संहिता ४. १६. १२
वधैः शुष्णस्याशुषस्य मायाः ।। ऋक्संहिता ६. २०. ४
यः शुष्णमशुषं यो व्यसम् ।। ऋक्संहिता २. १४. ५
शुष्णमशुषं कुयवं कुत्साय ।। ऋक्संहिता २. १९. ६

इत्युदाहरणानि।

तस्मादत्रापि रूढिबलादशुषशब्दः शुष्णपर्याय एव स्वीकर्तुमुचितः । अग्निशब्दस्तु रूढिमपरित्यजन्नेव पावकवाचको भूत्वा मुख्यार्थ-बाधदर्शनात्सादृश्यलक्षको भवति । युद्धप्रकरणं चैतत्। नात्राग्निरक्षा-वर्णनस्यावसरः। शूरपत्न्य इत्यपां सेनानां च साधारणं नाम। तस्मात्तत्र श्लेषः। यथा आपः अग्निं शमयितुमागच्छन्ति तथा शुत्रुसेनास्तूर्वयाणं शुष्णं शमयितुमागताः। ताभ्य इन्द्रस्तं रक्षितवानिति तात्पर्यम्। अत एवाशुषस्याग्निनौपम्यं कथितम् । अपां सेनानां च श्लेषेणौपम्यं अग्नेरशुषस्य च रूपकेणेति विशेषः। छन्दस्यपि बहवोऽलङ्कारा दृश्यन्ते। तान् विस्तृत्य प्रदयर्शयितुं नेदं स्थलम्।

किं पर्यवसन्नम्। यः सौवश्व्यः सूर्य शुष्णोऽशुषः स एव सुश्रवास्तूर्वयाणः। ननु भगवानिन्द्रः कथमसुराय साहाय्यकमकरोत्। शुष्णो नैकान्ततो दुष्टोऽसुरः। बलिरिव बहुसद्गुणोपेतो भगवद्भक्तश्च भवति।

ननु एकदाऽनुगृहीतः पुनरन्यदा कुत इन्द्रेण विनाश्येतेति चेत्। नैषाऽप्यनुपपत्तिः। यदाह-

परा पूर्वेषां सख्या वृणक्ति वितर्तुराणो अपरेभिरेति ।
अनानुभूतीरवधून्वानः पूर्वीरिन्द्रः शरदस्तर्तरीति ।।

ऋक्संहिता ६. ४७. १७ गर्गः

इन्द्र। पूर्वेषां पूर्वभाविनामाराधाकनाम् । सख्या सख्यानि । परावृणक्ति परिवर्जयति । वितर्तुराणः तान् अतिक्रामन् । अपरेभिः नूतनैराराधकैः सह । एति गच्छति । अनानुभूतीः अपरिचरणाः प्रजाः । अवधून्वानः त्यजन् । पूर्वीः शरदः पूर्वान् कालान् पूर्वकालसख्यानीति लक्ष्योऽर्थः । तर्तरीति अतिक्रामति। एकदाऽनुगृह्णन्नपि स एवानुगृहीतो दुरहङ्कार-वशादात्मानं यदि विस्मरेत्तरेत्तमिन्द्रो निगृह्णातीत्यर्थः । एकदा निगृहीतो भक्त्या यद्यात्मानमारायेदित्यत्र न पृथक् युक्तिः प्रदर्शनीया । तृत्सवोत्र निदर्शनम् । ते भगवतैकदा निगृहीताः ।

इन्द्रेणैते तृत्सवो वेविषणा आपो न सृष्टा अधवन्त नीचीः।

ऋक्संहिता ७. १८. १५ वसिष्ठः

त एवान्यदाऽनुगृहीताः।

वसिष्ठस्य स्तुवत इन्द्रो अश्रोदुरुंतृत्सुभ्यो अकृणोदु लोकम् ।।

ऋक्संहिता ७. ३३. ५ वसिष्ठः

तस्मादेकदा निगृहीतस्य कुत्सस्य पुनरन्यदाऽनुग्रहणं च न युक्त्यपेतम् ।

दशमं प्रकरणम्

## शुष्ण एव प्रसिद्धः कर्णः

स्थापितं पूर्वेषु प्रकरणेषु कुत्स एतशश्चेत्येकस्यैव वीरस्य नामनी द्वे। सौवश्व्यः सूर्यः शुष्णः, अशुषः, सुश्रवाः तूर्वयाणश्चेत्येकस्यैव पञ्च नामानीति। तयोश्च युद्धे एकदा कुत्सः शुष्णेन जितः अन्ततः कुत्सः शुष्णं हतवानिति च । स्थापितं चान्त्ये युद्धे भगवानिन्द्रः कुत्सस्य सारथ्यं चकारेति च । अथोत्तेरेषु प्रकरणेषु जयेतिहासस्य वेदमूलत्वं निरूप्यते। योऽयं महान्वीरः शुष्णः स एव जयेतिहासे भारतापरर्याये प्रसिद्धः कर्णः । शुष्णस्य सूर्यांशसम्भवत्वं, रथचक्रव्यसने प्राप्ते शत्रुतः पराजयः, शोभनकर्णवत्त्वार्थयोगिसुश्रवो नाम चात्रानुमापकानि लिङ्गानि । सहजकुण्डालालङ्कृतकर्णत्वाद्युक्तं हि सुश्रवस्त्वम् । इतश्च शुष्ण एव प्रसिद्धः कर्णः।

पुरा यत्सूरस्तमसो अपीते-
स्तमद्रिव फलिगं हेतिमस्य।
शुष्णस्य चित्परिहितं यदोजो
दिवस्परि सुग्रथितं तदादः।।

ऋक्संहिता १. १२१. १० कक्षीवान्

हे अद्रिवः वज्रिन्। पुरा पूर्वम्। यत् यो हेतिः। छान्दसोलिङ्गव्यत्ययः । सूरः सूर्यस्य। तमसो अपीतेः तिमिरतोऽप्ययस्य। कर्तेति शेषः। तम् । फलिगं हेतिं मेघास्त्रम्। अस्य प्रयुक्तवानसि। यत् शुष्णस्य। परिहितं

परिधानवदावरकमित्यर्थः । कवचरूपमिति यावत् । दिवस्परि द्युलोकादागतं दिव्यमिति यावत् । सुग्रथितं शरीरे सुष्ठु ग्रथितम् । त्वगन्तरवत् स्थितमित्यर्थः । ओजः । अस्ति । तत् । आदः आदत्तवानसि । विश्लिष्टं शरीरतः कृत्वा स्वीकृतवानसीति भावः । यदस्त्रं तेजसोऽपि प्रलयकरं तेन मेधास्त्रेण शुष्णस्य तेजोरूपं दिव्यं कवचमपहृतवानसीति भावः ।

कर्णसहजकवचालङ्कृत इत्यैतिहासिकी प्रसिद्धिः । तच्च वर्म दिव्यतेजोरूपमेव केनापि लोहेन निर्मितम् । तं कवचं भगवानिन्द्रो याचमानः किलापहरत् । सा कथाऽत्राच्यते । नन्वत्रास्त्रेण कवचस्यादानं न दत्तस्य प्रतिग्रह इति चेत् । सत्यम् । तत्रैषां सङ्गतिः । भगवान्याचितवान् । कर्णश्च दत्तवान् । तथापि शारीरस्य दिव्यतेजः कवचस्य त्वचासहैकीभूय तिष्ठतः कथं दानमादानं वा साध्यम् । तदा भगवान्मेघास्त्रेणादत्तवान् । नान्योऽस्त्युपायः । नन्वयाचमानएव कुतोऽस्त्रेण नादत्तवानिति चेत् । कर्णस्य तदस्त्रं प्रतिकर्तुं शक्तिर्विद्यते । तस्मात्तदसाध्यम् । दत्ते कवचे तु सत्यबद्धः स प्रतिक्रियां न कृतवान् । ईदृशेन दानकर्मणा कर्णस्य यशोऽद्यापि समुज्ज्वलम्। दाने वैदिकं प्रमाणं च विद्यते।

एवा न इन्द्रोतिभिरव
पाहि गृणतः शूर कारून् ।
उत त्वचं ददतो वाजसातौ
पिप्रीहि मध्वः सुषुतस्य चारोः ॥

ऋक्संहिता ५. ३३. ७ संवरणः

हे इन्द्र। नः अस्मान् । ऊतिभिः रक्षणैः । अव । एवेति निर्धारणे । हे शूर । कारून् त्वदाराधनं कुर्वाणान् । गृणतः स्तोतॄनस्मान् । पाहि ।

उत अपि च। त्वचं ददतः पुरुषस्य। वाजसातौ युद्धे सुषुतस्य सुष्ठु अभिषुतस्य ।चारोः ।मध्वः सोमस्य ।पिप्रीहि तृप्तो भव ।कर्णेन सह युद्धेऽस्माकं हविरिदं गृहीत्वा रक्षको भवेति तात्पर्यम् ।अयं च संवरणः पाण्डवपक्षीयऋषिः । तदुत्तरत्र निरूपयिष्यामः ।त्वचं ददत इति सोमस्य विशेषणं करोति सायणः ।रहस्येतिहासानबोधाद्यथाकथंचित् व्याख्यानपूरणमेतत् । सम्पूर्णसूक्तमिदं युद्धे भगवत्साहाय्यकं साक्षात्परोक्षं च वर्णयति प्रार्थयति वा । प्रकृतायामृचि त्वक् च लक्षणया त्वचासहैकीभूतं तेजः। अन्या च तत्सूक्तस्था ऋगत्र भवति ।

पुरु यत्त इन्द्र सन्त्युक्था गवे चकर्थोर्वरासु युध्यन् ।
ततक्षे सूर्याय चिदोकसि स्वे वृषा समत्सु दासस्य नाम चित् ॥
ऋक्संहिता ५. ३३. ४ संवरणः

हे इन्द्र । यत् यानि । इन्द्र ब्रह्म क्रियमाणानवीय इत्यादाविव वचनव्यत्ययः । त तव । उक्था स्तोत्राणि । सन्ति । तानि । गवे जातावेकवचनम् । गोभ्योऽर्थाय । चकर्थ । आपो धेनवे वा गावः । एकत्र वर्षार्थमवग्रहनाशनमन्यत्र ऋषिगोधनरक्षार्थं दस्युनाशनं च कर्मणी ।किंच उर्वरासु सारवत्तरक्षेत्रेषु निमित्तभूतेषु युध्यन् चकर्थ । स्तोत्रस्तोतव्यकर्माभेदाध्यवसायेन यत्तच्छब्दार्थयोरन्वयः ।उत्तरार्धर्चे परोक्षस्तुतिः ।वृषा इन्द्रः ।स्वे ओकसि स्वगृह एव स्थिताय ।सूर्याय सोश्व्याय । द्वितीयार्थे चतुर्थी । सौवश्व्यं सूर्यम् । ततक्षे सहजकवचादानेन तनूकृतवान् ।

तस्माज्जयेतिहासस्थं कवचदानं कर्णस्य मूलप्रमाणवदेव भवति । एकस्यामृचि सूर्यतक्षणाभिधानादन्यत्र त्वचं ददत्स एव ग्राह्य औचित्यात् । उपबृहकेतिहासबलाच्च । इतश्च शुष्ण एव प्रसिद्धः कर्णः।

सूरश्चक्रं प्र वृहज्जात ओजसा
प्रपित्वे वाचमरुणो मुषायतीशान आ मुषायति ।

ऋक्संहिता १. १३०. ९ परुच्छेपः

ईशानः इन्द्रः । ओजसा तेजसा । जातः प्रवृद्धः सन् । प्रपित्वे समीपे गत्वा । सूरः सूर्यस्य । चक्रं प्रवृहत् रथात्पृथगकरोत् । किंच अरुणः सूर्यस्य अत्रापि षष्ठ्यर्थे प्रथमा । वाचं वचश्च। मुषायति अपाहरत् । आमुषायति आसमन्तादपाहरत् । इत्यर्धर्चस्यास्य प्रतिपदार्थः । कर्णस्य समये ब्रह्मास्त्रं नास्फुरदित्यैतिहासिकी प्रसिद्धिः। तदेवोत्रोत्तर-वाक्येनोच्यते। अत्र वाक् च अस्त्रमन्त्ररूपा । तस्या अपहरणं च विस्मारणम् ।

ब्राह्मणशापेन रथचक्रस्य भूमौ मज्जनं गुरुशापादस्त्रविस्मरणं च भारतं वदति । तौ शापावधिकृत्य नास्माकमस्ति वैदिकं प्रमाणम् । तथापि तच्छापफलितरूपे रथचक्रभङ्गास्त्रविस्मारणे भगवत्कृते इत्यत्रासित् प्रमाणबलं वैदिकम् । भग्नस्य रथचक्रस्य भूमौ पात एव भूमौ मज्जनं भारतेऽवर्णि । भगवतस्ताटस्थ्यस्य रक्षणाया यं यत्नः । कोऽयं भगवान् यस्य ताटस्थ्यं रक्षितुमैतिहासिकाः प्रयत्नमकार्षुरिरति चेत् । स इन्द्रस्य भगवतोऽवतारः कश्चिन्महापुरुषः। तमुत्तरत्र निरूपयिष्यामः ।

इतश्च शुष्ण एव प्रसिद्धः कर्णः । कर्णस्य सततं घृणित्वमितिहासे प्रसिद्धम्।

वियुक्तः कवचेनैष सहजेन विचेतनः।
कुण्डलाभ्यां च दिव्याभ्यां वियुक्तः सततं घृणी।।

इति महाभारते रथातिरथसङख्याने भीष्मः । शुष्णश्चाशुषः । अशुषत्वं च नित्यं सुखराहित्यम् । शुषं शूषं सुखं न विद्यते यस्य स इति

व्युत्पत्तेः । सततं घृणावतां कुतः सुखम् । नन्वन्या व्युत्पत्तिर्विद्यते-ऽशुषशब्दस्य। शोषयितुमशक्योऽशुष इति । तस्मिन्नपि निर्वचने कर्णोऽशुषः । तस्य कुण्डले दिव्ये वर्म च दिव्यं त्रयममृतोद्भवं भवन्ति । यथा -

भविष्यति महाबाहुः कुण्डलीदिव्यचर्मभृत्।
उभयं चामृतमयं तस्य भद्रे भविष्यति।।

महाभारतम्, वनपर्व ३०७. १७

कुण्डलयोः कवचस्यामृतमयत्वात्सोऽन्यैः शत्रुभिर्महास्त्रैरपि शोषयितुमशक्यः । तस्माद्युक्तं तस्याशुष इति नाम।

इतश्च शुष्ण एव प्रसिद्धः कर्णः। यन्निगमे शुष्णस्य गौरिति नामान्तरमस्ति । इतिहासे कर्णस्य वृष इति । गोवृषशब्दौ तुल्यार्थौ । कर्णस्य वृषनामवत्त्वे भारते बहूनि प्रमाणानि सन्ति । निदर्शनार्थमेकं दर्शयामः।

ब्रह्मण्यः सत्यसंघश्च तपस्वी निजितेन्द्रियः।
रिपुष्वपि दयावांश्च तस्मात्कर्णो वृषःस्मृतः।।

द्रोणपर्वणि अर्जुनं प्रति भगवद्वाक्यमेतत्।

अस्य गोनामवत्त्वे निगमोऽयं भवति ।

त्वमायसं प्रति वर्तयो गोर्दिवो अश्मानमुपनीतमृभ्वा ।
कुत्साय यत्र पुरुहूत वन्वञ्छुष्णमनन्तैः परियासि वधैः।।

ऋक्संहिता १. १२१. ९ कक्षीवान्

गोर्गन्तुः शुष्णस्येति सायणः। पुगवसदृशबलत्वाद्गोनाम्न शुष्णस्येति सरलोऽर्थः । सूर्यस्य रूपत्वाद्वागोनामा शुष्णः । आदित्योऽपि गौरुच्यत इति यास्कः ।

सन्त्वेतानि बहूनि लिङ्गानि प्रत्यक्षं कर्णनाम्ना च शुष्ण उच्यते । तदतीव स्पष्टं लिङ्गं कर्णशुष्णयोरैक्ये ।

इन्द्राकुत्सा वहमाना रथेन आवामत्या अपि कर्णे वहन्तु ।
निः षीमद्भ्यो धमथो निः षधस्थान्मघोनो हृदो वरथस्तमांसि ।।

ऋक्संहिता ५. ३१. ९ अवस्युः

हे इन्द्राकुत्सा हे इन्द्राकुत्सौ । अपि किंच । रथेन । वहमाना उह्यमानौ । वां । अत्याः अश्वाः । कर्णे कर्णापरपर्याये शुष्णे । वहन्तु अवहन् । भूतार्थे लोट् । सीं । एतं शुष्णम् । अद्भ्यः आकाशात् । निर्धमथः निरबाधेथाम् । सधस्थात्स्वस्थानाद्भूमेश्च निर्धमथः । मघोनः यजमानस्य । (कुत्साग्रजस्य) हृदः । तमांसि दुःखात्मकानि । वरथः निवारयथः । अद्भ्यः कर्णस्य निर्धमनं सिद्धिबलादाकाशं प्रत्युड्डीनस्य निपातनम् । एतदधिकृत्य प्रकरणान्तरे प्रमाणं दर्शयामः । महाभारतेऽभिमन्योर्गगनं प्रत्युत्पतनं पक्षिराजस्येव भ्रमणं चावर्णिषाताम् । निगमे कर्णस्य । तन्नासाध्यं कर्म सिद्धिमताम् । भूमेर्निर्धमनं च मारणम् ।

सायणाचार्यस्तु सीमित्यस्य शुष्णमित्येवार्थं कृतवान् । तथापि तस्य व्याख्याने कर्णः स्तोत्राणि करोतीति व्युत्पत्त्या स्तोता । अप्रसिद्धार्थ-कल्पनमेतत् । शुष्णयुद्धप्रकरणमध्ये इन्द्राकुत्सयोः स्तोतृसमीपं प्रतिरथेनागमप्रार्थना प्रकरणविरुद्धा । तस्माच्छुष्ण एव कर्णः ।

एवं प्रत्यक्षं कर्णनाम्ना निर्देशात्सूर्यांशजत्वात्सुश्रवस्त्वात् सहजदिव्य-कवचवत्त्वात् तद्दानादशुषत्वात् कालेऽस्त्रविस्मरणाद् गोनामवत्त्वाद्रथ-चक्रव्यसने पराजयाच्च शुष्णो भारतप्रसिद्धः कर्ण एव भवति ।

एकादशं प्रकरणम्

## विरोधपरिहारः

भूयः पूर्वपक्षी प्रत्यवतिष्ठते। "ननु कृष्णस्यैवार्जुनः सारथिरुक्तः।" यथा-

स रन्धयत्सदिवः सारथये
शुष्णमशुषं कुयवं कुत्साय ।
दिवोदासाय नवतिं च नवे-
न्द्रः पुरो व्यैच्छम्बरस्य।।

ऋक्संहिता २. १९. ६ गृत्समदः

सः प्रसिद्धः । स दिवः दीप्तियुक्तः इन्द्रः । सारथये । कुत्साय । अशुषं परैः शोषयितुमशक्यम् । शुष्णम् । कुयवं कुयवनामानं च । रन्धयत् वशीकृतवान् । उत्तरोर्धर्चः कथान्तरसम्बद्धः । अत्र कुत्स एवेन्द्रस्य सारथिः प्रत्यक्षमुच्यते।

महो द्रुहो अप विश्वायु धायि
वज्रस्य यत्पतनेऽपादि शुष्णः।
उरु ष सरथं सारथये क-
रिन्द्रः कुत्साय सूर्यस्य सातौ ।।

ऋक्संहिता ६. २०. ५ भरद्वाजः

वज्रस्य। पतने लक्ष्ये । यत् यदा । शुष्णः । अपादि अभवत् । (तदा) महः महतः । द्रुहः द्रुहनामकस्य कुयवपितुः द्रोग्धुः कुयवस्य वा स्वयं शुष्णस्यैव वा । विश्वायु सर्वबलम् । अपधायि हतम् । इन्द्रः । सूर्यस्य सूर्यावतारस्य शुष्णस्य । सातौ साधने । सारथये । कुत्साय । सरथं

समानरथम् । उरु विशालं यथा तथा । कः अकरोः । अत्रापि कुत्स एवेन्द्रस्य सारथिरुच्यते । तस्मात्त्वदुक्तं कृष्णस्य सारथ्यं न सिध्यति।" इति।

अत्रेदमालोचनीयम्।

"...वङ्कू वातस्य पर्णिना ।
वहत्कुत्सम् आर्जुनेयं शतक्रतुः..." (ऋक्संहिता ८. १. ११)
"...तोदो वातस्य हर्योरीशानः ।" (ऋक्संहिता ४. १६. ११)
"वह कुत्समिन्द्र यस्मिञ्चाकन्त्स्यूमन्यू ऋज्रा वातस्यश्वा ।"
(ऋक्संहिता १. १७४. ५)
"वह शुष्णाय वधं कुत्सं वातस्याश्वैः ।।"
(ऋक्संहिता १. १७५. ४)

इत्येतावद्भिः सारथ्यं यत्स्पष्टं प्रतीयते कृष्णस्य न तत्कुत्सविशेषणेन सारथिशब्देन खण्डितं स्यात् । समानो रथिः सारथिरिति सारथिशब्दार्थः । रथिशब्द इकारान्तोऽपि दृश्यते। "रथीतमं रथीनाम्।" इत्यादि मान्त्रवर्णिकप्रयोगा उदाहरणम् । एवं योद्धाऽश्वखेदकश्चोभावपि रथी भवतः। तत्र मुख्यो रथिः । समानत्वं चाप्राधान्यं सूचयेत् । प्रायो रथारूढयोरुभयोर्मध्ये योद्धुः प्राधान्यं तत्समानत्वमनन्तरप्राधान्याद्-अश्वचोदकस्येति सारथिशब्दस्तत्र रूढोऽभूत् । प्रकृतयुगले तु योद्धुरपेक्षयाऽश्वचोदकस्यैव प्राधान्यं सर्वथाऽश्वचोदकेन नेयत्वात् । तद्विवक्षयैव पूर्वपक्षिणोदाहृतयोर्मन्त्रयोर्योद्धा सारथिशब्देनोच्यते । तत्र रूढार्थस्य बाधितत्वात्तत्सम्बद्धस्यावयवार्थस्य ग्रहणं लक्षणया । योद्धुरपेक्षयाऽश्वचोदकस्य प्राधान्यसूचनं लक्षणाप्रयोजनम् । एवं सामरस्यं स्यात् सर्वेषां निगमवचनानां समन्तादपश्यतां प्राचां व्याख्यानमत्रोपेक्ष्यम् ।

नन्वन्योऽस्ति विरोधः। वज्रस्य यत्पदनेऽपादि शुष्ण इत्यनेन शुष्णे भगवता वज्रप्रयोगः कृत इति प्रतीयते । आयुधप्रयोगश्च योद्धुः कृत्यम् । न सारथेः। कथमस्य सङ्गतिरिति चेत् । उच्यते । "यत्रोत बाधितेभ्य-श्चक्रं कुत्साय युध्यते" (ऋक्संहिता ४. ३०. ४) इत्यनेन कुत्सस्य सूर्येण सह योद्धृत्वं प्रत्यक्षमभिहितम् । "वह शुष्णाय वधं कुत्सं वातस्याश्वैः" इत्यनेन भगवतोऽश्वचोदकत्वेन सार्धं कुत्सस्य हन्तृत्वं चोच्यते । तदुभयं च गौणं वक्तुमशक्यम् । भगवतो वज्रप्रयोगस्तु योद्धृत्वं विनापिसम्भवेत् । वज्रं च विद्युच्छक्तिः । सा च भगवतो नित्यमधीना । निरायुधस्यापि भगवतः शरीरे नित्यं प्रवहति । तां च दृष्टिद्वारा परस्य शक्तिप्रणाशनाय प्रयोक्तुं भगवानिच्छन्पारयेत् । तादृशो भगवतः स वज्रप्रयोगः । न स्थूलायुधप्रयोगः । यत्र यत्र वज्रशब्दः स्थूलायुधविशेषपरस्तत्रापि विद्युच्छक्तेरुपाधित्वेनैव तस्य स्थूलायुधस्य वज्रत्वं वक्तव्यम् । न साक्षात् । एवं च वज्रशब्दस्य विद्युच्छक्तिरेव मुख्योऽर्थः । स्थूलायुधविशेष एव गौणोऽर्थ इत्युक्तं भवति । तस्माद्भगवतो वज्रप्रयोगोऽत्र न सारथित्वप्रतिबन्धकः ।

इयं च विद्युच्छक्तिः सर्वेषां च प्राणिनां प्राणशक्तिमनुगृह्णन्ती शरीरे स्वल्पेनांशेन प्रवहति। योगिनां तु प्रभूतेनांशनेति विशेषः । नेत्रयोस्तैजसत्वात्तत्रास्याः प्रसरणमधिकम्। दृष्टिदोषेण प्रणिनां कार्श्यं वृक्षादीनां म्लानता शिलादीनां च भेदस्तस्य एव लेशतः प्रतापः । किमु वक्तव्यं वशीकृततच्छक्तेर्योगेश्वरस्य भगवतस्तत्प्रयोगविषये माहाभाग्यम् । पश्यत निगमान्तरम्।

त्वं ह त्यदिन्द्र कुत्समावः
शुश्रूषमाणस्तन्वा समर्ये ।

दासं यच्छुष्णं कुयवं न्यस्मा
अरन्धय आर्जुनेयाय शिक्षन् ॥

ऋक्संहिता ७. १९. २ वसिष्ठः

इन्द्र । त्वम् । त्यत् तदा । समर्ये युद्धे । कुत्सम् । तन्वा शरीरेण । शुश्रूषमाणः परिचरन् । आवः ह अरक्षः । यत् यदा । अस्मै । आर्जुनेयाय अर्जुनीनक्षत्रजाताय कुत्साय । कार्त्तिकेयबाहुलेयवदत्र व्युत्पत्तिः । शिक्षन् उपदिशन् । दासं शत्रूणामुपक्षपयितारम् । शुष्णम् । कुयवं कुयवनामानं च । अरन्धयः वशीकृतवानसि । शरीरेण शुश्रूषणं शिक्षणं च सारथेरेव भवतो न रथिकस्येति मन्त्रेऽस्मिन्भगवतः सारथ्यमेव सूचितं भवति ।

अन्ये चात्र भवतः ।

स त्वं न इन्द्र धियसानो अर्कै-
र्हरीणां वृषन्योक्त्रमश्रेः ।
या इत्था मघबन्ननु जोषं
वक्षो अभि प्रार्यः सक्षि जनान् ॥
न ते त इन्द्राभ्यस्मदृष्वा
अयुक्तासो अब्रह्मता यदसन् ।
तिष्ठा रथमधि तं वज्रहस्त
आ रश्मिं देव यमसे स्वश्वः ॥

ऋक्संहिता ५. ३३. २-३ संवरणः

वृषन् । इन्द्र । सः प्रसिद्धः । त्वम् । अर्कैः स्तुतिमन्त्रैः निमित्तभूतैः । नः अस्मान् धियसान आयन् । हरीणां अश्वानाम् । योग्त्रम् नियोजन-रज्जुम् । अश्रेः आश्रयस्व । मघवन् । याः यावश्वान् । जोषं प्रीतिं । अनु अनुसृत्य । इत्या सत्यं यथातथा । अर्यः शत्रून् । जनान् । अभि

अभिलक्ष्य । वक्षः वोढसि । (किंच) सक्षि सोढासि । भविष्यदर्थे लुङ्लोटौ ।

ऋष्व रमणीय। इन्द्र। यत् यस्मात्कारणात्। अयुक्तासः त्वय्यनिहित-चित्ताः । अब्रह्मता अब्रह्मतया स्तुतिलक्षणमन्त्रराहित्येनोपलक्षिताः । ते अस्माकं शत्रवो जनाः । अस्मन् अस्माकं पक्षात् । ते त्वात् द्वितीयार्थे षष्ठी । नाभ्यसन् नाभ्यभवन् नाच्छिन्दन्नित्यर्थः । यस्मात्तेषां त्वयि भक्तिर्नास्ति त्वदाकर्षणपक्षमेति हेतुवाक्यस्यास्य तात्पर्यम् ।(तस्मात्) वज्रहस्त। तं प्रसिद्धम् । रथं कुत्सरथं । अधितिष्ठ । देव । स्वश्वः सन् सारथिः सन् । रश्मिं योक्त्रम् । यमसे नियच्छसि । उभयत्रापि वर्तमानसामीप्याद्वर्तमानप्रयोगः । व्यत्ययेन वा लट् ।

संवरणस्येयं प्रार्थना । सम्यग्वृणोतीति संवरण इति व्युत्पत्तिः । अयं चर्षिः पाण्डवपक्षस्य कृष्णं सारथित्वेन वृणोति । महाभारते स्वयमर्जुन एव वृणोति ।ईदृशं कथासंस्करणं भगवतो गौरवस्य विशेषतः पोषणायेति क्षन्तव्यम् । अयमेवर्षिः ऋगन्तरे त्वचं ददतो वाजसाताविति कर्णेन सह युद्धे साहाय्यकमेव प्रार्थयत इत्येष च सारथित्वेन प्रार्थनाप्रकरणात् महाभारतकथासम्बन्धिन्येव भवतीत्यत्र न कश्चित् संशयः ।

परिहृतो विरोधः। स्थितं यथा निरूपितं भगवतः सारथ्यम् ।

एतेन-

कुत्सायेन्द्रोऽसुरं शुष्णं जिघांसुः कुत्समात्मनः ।
सारथिं कल्पयित्वाऽस्य शुत्रुं शुष्णमहं स्ततः ।।

बृहद्देवता

इति बृहद्देवतायामुक्तं प्रत्युक्तं भवति । सारथिपदलिङ्गप्रतारितस्य सोक्तिः। न ते त इति मन्त्रे स्वश्वशब्दः सारथिपरत्वेनास्माभिर्व्याख्यातः । शोभनाः अश्वाः यस्य स स्वश्व इति व्युत्पत्तिः । अश्वपतेरेवेदं पदं युक्तं नाश्वचोदकस्येति चेत् । अश्वचोदकस्याप्यश्वेषु निसर्गेणेश्वर-त्वान्नासङ्गतिः । प्राचामृषीणां भाषायां स्वशब्दः सारथौ रूढ इत्यस्माकं दृढमनुमानम् । कर्णः सूतपुत्र उच्यते जयेतिहासे । स्वश्वपुत्रो निगमे । अत्र स्वश्वशब्दः सूतजातिपर इत्यस्माकमनुमानम् । यद्यपि कर्णस्य पोषकः पिता न स्वयं कस्यापि सारथिः । तथापि प्रायेणाश्वचोदनव्यापारेण जीवतां सूतानां पतिः स्यात् । अश्वसम्बन्धादेव सूतानां गन्धर्वा इति नामापि रूढं स्यात् । यथा नागाराधकानां नागा इति तथा गन्धर्वजीविनां गन्धर्वा इति प्रसिद्धं स्यात् । येषां दृष्टौ स्वश्वो न सूतपर्यायः तेषां पक्षे यौगिकार्थ एव वक्तव्यः । तत्र भगवतः स्वश्वत्वं च वाताश्वष्वधिकार-लब्धेः ।



द्वादशं प्रकरणम्

# कुत्स एव प्रसिद्धोऽर्जुनः

स्थापितं शुष्ण एव प्रसिद्धः कर्ण इति । तस्य प्रतिस्पर्धी कुत्स एव भारतेतिहासे प्रसिद्धोऽर्जुनः। कर्णप्रतिस्पर्धित्वमेव कुत्सस्यार्जुनत्वे प्रथमं लिङ्गम् ।

पाण्डवस्यार्जुनस्यार्जुन नाम प्रसिद्धम् । कुत्सस्यार्जुनेयनाम । उभयमप्येकार्थकम् । अर्जुन्योरुत्तरफल्गुन्योर्जात आर्जुनेयः अर्जुनो वा । यथा फल्गुन्योर्जातः फाल्गुनःफल्गुनो वा । एकं सतद्धितं पदम् । अन्यल्लुसतद्धितम् । भारते उदीच्यपाठे प्रायः फाल्गुनशब्दो दृश्यते । दाक्षिणात्यपाठे प्रायः फल्गुन शब्दः । अत एवान्ध्रभारते फल्गुनशब्द एव सर्वत्र प्रयुज्यते । अर्थे फल्गुनशब्दतुल्योऽर्जुनशब्दः फल्गुनी शब्दतुल्यत्वादर्जुनी शब्दस्य । एवं फल्गुनशब्दतुल्य आर्जुनेयशब्दः । कुत्स एव प्रसिद्धोऽर्जुन इत्यत्रेदं अपरं लिङ्गम् । अर्जुनीशब्दस्योत्तर-फल्गुनीवाचकत्वे पश्यैतामृचम् ।

सूर्याया वहतुः प्रागात्सविता यमवासृजत् ।
अघासु हन्यन्ते गावोऽर्जुन्योः पर्युह्यते ॥

ऋक्संहिता १०. ८५. १३ सावित्री

अघासु मघासु। अर्जुन्योः फल्गुन्योरिति सायणः । भारते फल्गुनीनक्षत्रजाते त्वस्यार्थस्य फल्गुनशब्देन फाल्गुनशब्देन वा गतार्थत्वादर्जुनशब्दस्यार्थमन्यथा वर्णयति।

पृथिव्यां सागरान्तायां वर्णो मे दुर्लभः समः।
शुद्धत्वाद्रूपवत्त्वाच्च तेन मामर्जुनं विदुः।।

उत्तरं प्रत्यर्जुनवाक्यमिदम् । नीलकण्ठ इममर्जुनशब्दमृजधातोर्व्युत्पन्नं मन्यते। ऋजगतिस्थानार्जनोपार्जनेष्वित्यत्र अर्जुनं च दीप्तिमत्त्वात्समत्वाच्छुद्धकर्मकरत्वाच्चार्जुन इत्यर्थ इति वदति । तत्र समत्वममूलम् । मे समो वर्णो दुर्लभ इति मूलार्थः । नाहं सम इति । इदं निर्वचनं कुत्सार्जुनयोरेकत्वसाधनस्यानुकूलमेव भवति । तस्मिन्पक्षे वयं फाल्गुनार्जुनेयशब्दावेव तुल्यार्थावित्यभिधायार्जुनशब्देन तुल्यार्थमन्यत् कुत्सस्य नाम प्रदर्शयामः । तत्रैषा भवति ।

त्वं सत्य इन्द्र धृष्णुरेतान् त्वमृभुक्षा नर्यस्त्वं षाट् ।
त्वं शुष्णं वृजने पृक्ष आणौ यूने कुत्साय द्युमते सचाहन् ।।

ऋक्संहिता १. ६३. ३

द्युमते दीप्तिमते यूने तरुणाय कुत्सायेति सायणः । द्युमानिति कुत्सस्यासाधारणं विशेषणम् । तस्मादेकं नामैव भवति।

"भुवत्ते कुत्सः सख्ये निकामः" ऋक्संहिता ४. १६. १०

इति मन्त्रपादे कुत्सो निकाम इति विशेष्यते । निकामो नितरां कमनीयः । नितरां कामयमान इति वा सायणः । उत्तरपादे साक्षाद्भगवत्समानरूपत्ववर्णनात्पूर्वोऽर्थो ज्यायान् । निकामशब्दस्यार्थान्तरकल्पने वोत्तरत्र यद्भवत्समानरूपत्वं कथ्यते तदप्यलं कुत्सस्य लोकोत्तरं रूपवत्त्वं कथयितुम् । अन्यां पश्यत ऋचम् ।

स वेतसुं दशमायं दशोणिं तूतुजिमिन्द्रः स्वभिष्टिद्युम्नः ।
आ तुग्रं शश्वदिभं द्योतनाय मातुर्नसीमुप सृजा इयध्यै ।।

ऋक्संहिता ६. २०. ८

अत्र कुत्सो द्योतननाम्ना निर्दिष्टः । किं कृत्वा कारणम् । लोकोत्तररूपवत्त्वादेव तस्य द्योतन इत्येकं नाम प्रसिद्धम् । इदमेव

नाम द्युमत इति समानार्थकेन शब्देन त्वं सत्य इति मन्त्रे प्रोक्तम् । यद्विशेष्यमन्यद्विनैव द्योतनशब्देनात्र कुत्सं वक्ति तद्ज्ञापयति तदिदं कुत्सस्यासाधारणं नामेति । सायणस्तु द्योतनाय एतत्संज्ञाय राज्ञे इति व्यख्यातवान् । वेतसुतुग्रेभानां वशीकरणाल्लिङ्गाद्द्योतनसंज्ञश्च कुत्स एव नान्यः । पश्यतात्रान्यामृचम्।

अहं पितेव वेतसूँरभिष्टये तुग्रं कुत्साय स्मदिभं च रन्धयम् ।
अहं भुवं यजमानस्य राजनि प्र यद्भरे तुजये न प्रियाऽऽधृषे ॥

ऋक्संहिता १०. ४९. ४

वैकुण्ठस्येन्द्रस्यगीतास्वेष मन्त्रः । सवेतसुमिति मन्त्रमिमं चान्यत्र प्रकरणे पूर्णतया व्याख्यास्यामः । द्योतनः कुत्स एवेति दर्शयितुम् अत्रोदाहरणमात्रम् ।

किं पर्यवसन्नम् । अर्जुनशब्दो यदि दीप्तिमद्वाचकः तर्हि द्योतनशब्दस्य द्युमच्छब्दवत्पर्यायः । तस्मात्तदप्येकं लिङ्गं कुत्स एव प्रसिद्धोऽर्जुन इत्यत्र ।

परे तु अर्जुनशब्दं वज्रवाचकं मन्यन्ते । पाण्डवोऽर्जुनो वज्रस्य तेजोंशावतार इति तेषां दृष्टिः । वज्रवज्रिणोरभेदाध्यवसाया-त्तस्येन्द्रावतारत्वोक्तिः सङ्गच्छते। भीषणगर्जनसमये स्वस्मिन्न-शनिर्मापतीदिति यदर्जुननामान्युच्चारयन्ति तदत्र लिङ्गम् । अर्जुनशब्दस्य वज्रवाचकत्वे त्वेषा भवति ।

इन्द्रो हर्यन्तमर्जुनं वज्रं शुक्रैरभीवृतम् ।
अपावृणोद्धरिभिरद्रिभिः सुतमुद्गा हरिभिराजत ॥

ऋक्संहिता ३. ४४. ५

अयं च पक्षः कुत्सस्यार्जुनस्य चैकत्वसाधनायानुकूल एव भवति ।

निघण्टौ कुत्सशब्दो वज्रपर्यायेषु पठितः । वज्रपर्यायस्य कुत्सशब्दस्य निर्वचने "तत्र कुत्स इत्येतत्कृन्ततेः । ऋषि कुत्सो भवति । कर्तास्तोमानामित्यौपमन्यवः । अत्राप्यस्य वधकर्मैव भवति । तत्सख इन्द्रः शुष्णं जघानेति" इति यास्कः । (निघण्टु ३. ११. ५) अस्यायं भावः । कुत्सशब्दस्य द्वावर्थौ वज्रः कश्चिदृषिश्च । वज्रपर्यायत्वे कृन्ततीति कुत्स इति व्युत्पत्तिः । उकारादेश ऋकारस्य । नकारलोपः । सकारागमश्चात्र विक्रियायाम् । ऋषिवाचकत्वे मतद्वयं वर्तते । करोति स्तोमान्कुत्स इति औपमन्यवमतम् । तत्रापि कृन्ततीत्येव व्युत्पत्तिरिति यास्कस्य स्वमतम् । कारणं तत्र तत्सखस्येन्द्रस्य शुष्णवधः । ननु इन्द्रः शुष्णं चेज्जघान कथं कृन्तत्यथ योगी कुत्स इति चेत् । नैष दोषः।

इन्द्रस्य प्रेरकत्वाच्छत्रुहननशक्तिनाथत्वाच्च सर्वत्र वधकर्तृत्वं तस्योच्यते । तथापि स येन द्वारा तत्कर्म कारयति सोऽपि वधकृदित्यत्र न कश्चिद्विरोधः । तत्सख इन्द्रः शुष्णं जघानेत्यस्य इन्द्रः कुत्सद्वारा शुष्णं घातयामासेत्येव तात्पर्यम् । अतः कृन्ततेः कुत्स इति ऋषिवाचकत्वेऽपि व्युत्पत्तिः सङ्गच्छते।

किं पर्यवसन्नम् । यदि वज्रवाचकोऽर्जुनशब्दः पाण्डवे वर्तमानः तर्हि कुत्सशब्दस्य सपर्यायः । कुत्सस्य वज्रावतारपक्षे साक्षादेव हि पर्यायत्वमभेदात् । इतश्च कुत्स एव प्रसिद्धोऽर्जुनः । अर्जुनस्य श्वेतवाहननाम.प्रसिद्धम् । कुत्सस्य ऋज्राश्व नाम । अर्जुनशब्दवच्छ्वेतशब्दोऽपि सामान्यतो दीप्तिमद्वाचक एव ग्राह्य । न श्वेतवर्णवाचकः । सामन्यतः श्वेतवर्णत्वे तत्र नाम्नि न तावदाधिक्यम् । कुत्ससम्बन्धिनामृज्राणामश्वानां वाताश्वत्वाद्दिव्यत्वम् । दिव्यत्वस्य चासाधारणदीप्तिमत्त्वमेवानुबन्धीगुणः । न श्वेतवर्णमात्रवत्त्वम् । अथ केनोद्देशेन

भारतेतिहासकारः ऋज्रानश्वान् श्वेतान् वदतीति चेत् । तेषां वाताश्वत्वं द्योतयितुमेवेति प्रतिभाति । वायुः स्वयं श्वेतवर्णः इत्युच्यते । तस्मात्तस्यहयाश्च श्वेता इतीतिहासकारस्य दृष्टिः । वायोः श्वेतत्वे द्वे ऋचौ प्रदर्शयामः।

राये नु यं जज्ञतू रोदसीमे राये देवी धिषणा धाति देवम् ।
अध वायुं नियुतः सश्चतस्वा उत श्वेतं वसुधितिं निरेके ॥

ऋक्संहिता ७. ९०. ३ वसिष्ठः

पीवो अन्नाँ रयिवृधः सुमेधाः श्वेतः सिषक्ति नियुतामभिश्रीः ।
ते वायवे समनसो वितस्थुर्विश्वेन्नरः स्वपत्यानि चक्रुः ॥

ऋक्संहिता ७. ९१. ३ वसिष्ठः

तस्य श्वेतपशुप्रियत्वं च "वायव्यँ श्वेतमालभेत" इत्यादि ब्राह्मणे स्पष्टम् । नन्वेवं चेदृज्रश्वेतशब्दवुभावपि श्वेतवर्णपरावेव भवतामिति चेत् । तत्त्वदृष्ट्या ते श्वेतवर्णा एव भवन्ति । अप्सारमयाः सर्वेषां प्राणा एव हि वायोरश्वा उच्यन्ते । ननु ते वायोर्विभूतिविशेषा एव नाश्वा इति चेत् भूषणमेवेदं न दूषणम् । सर्वस्याश्च देवतायास्तद्विभूतय एव रथत्वेन वाहनत्वेनायुधत्वेन च स्तोतृभिः कल्प्यन्ते । यथा सूर्यस्य सप्त स्वकिरणा एव वाहनानि तथा वायोऽपि प्राणा एव वाहनानीत्यत्र न कश्चिद्-विरोधः । अपां च शुक्लवर्णत्वमुपनिषत्सु प्रसिद्धम् । व्यक्तिदृष्ट्याा तु तेऽश्वाः सामान्यतो दीप्तिमन्तः । न सर्वे श्वेतवर्णाः । अत्र विशेषमुत्तरत्र वक्ष्यामः । ननु का तत्त्वदृष्टिः का व्यक्तिदृष्टिः । उच्यते । कुत्स-सम्बन्धिष्वश्वेषु या शक्तिर्दृश्यते सा प्राणानामतिशयिता शक्तिः । अतस्ते वातस्याश्वा उच्यन्ते । यानि शरीराणि तेषां तास्तु व्यक्तयः । तत्सम्बन्धात्ते कुत्सस्य । ते प्राणा इति दृष्टौ श्वेताः । अश्व शरीराणीति यथा निगमोक्तवर्णाः । तं च निगममुत्तरत्रोदाहारिष्यामः ।

किं पर्यवसन्नम् । कुत्स ऋजाख्यवाताश्ववान् । अर्जुनः श्वेतवाहनः । वाताश्वाश्च तत्त्वतः श्वेताः । तस्मादृजाश्वश्वेतवाहनशब्दौ तुल्यार्थौ भवतः ।

इतश्च कुत्स एव प्रसिद्धोऽर्जुनः । कुत्सस्य तद्भ्रातृणां चार्षे सूक्ते ऋगेका दृश्यते ।

स सव्येन यमति व्राधतश्चित्
स दक्षिणे सङ्गृभीता कृतानि ।
स कीरिणा चित्सनिता धनानि
मरुत्वान्नो भवत्विन्द्र ऊती ॥

ऋक्संहिता १. १००. ९

स इन्द्रः सव्येन वामहस्तेन व्राधतश्चित् हिंसकानपि शत्रून् यमति निगृह्णाति । स इन्द्रः दक्षिणे दक्षिणहस्ते कृतानि यजमानेन कृतानि हवींषि समर्पितानि जपादीनि कर्माणि वा सङ्गृभीता सङ्गृहीता भवति । स इन्द्रः कीरिणाचित् स्तोत्रद्वारा च धनानि सनिता साधयिता भवति । तादृशः मरुत्वानिन्द्रः नः अस्माकं ऊती ऊतये रक्षणाय भवतु ।

अहंकारवर्जिताः प्राञ्चऋषयः स्वद्वारा भगवानेव विश्रुतानि कर्माणि करोतीति पश्यन्तस्तथा वर्णयन्ति स्म । कुत्सस्य सव्यपाणिना यः शत्रुवधः क्रियते स भगवतैव क्रियत इति पश्यन्तस्ते भ्रातरः स सव्येन यमति व्राधतश्चिदित्याहुः । ननु शरीरं कुत्सत्येति चेत् । नैष दोषः । तदपि भगवत्समर्पितं भगवत एव भवति । तस्मादत्र कुत्स एव भगवदाविष्टः सव्येन पाणिना शत्रून् हन्तीति वास्तविकोऽर्थः । अर्जुनश्च सव्यसाची प्रसिद्ध इतिहासे । उदाहृत मन्त्रलिङ्गात्कुत्सस्य ध्वनितं सव्यसाचित्वमेवार्जुनस्योच्यते ।

ननु नैतल्लिङ्गम् । साक्षादिन्द्रेण समन्वये साध्ये तदाविष्टेन समन्वयः क्लिष्टो मार्गः । तस्मात्साक्षादिन्द्रस्यैव स्वभावोऽयं यत्सव्यहस्तेन शत्रुहननमिति चेत् । अस्ति तत्र प्रतिबन्धकम् । यदाह-

हन्ता वृत्रं दक्षिणेनेन्द्रः पुरू पुरुहूतः ।
महान्महीभिः शचीभिः ॥

ऋक्संहिता ८. २. ३२

अत्र दक्षिणेन हस्तेन वृत्रं हन्तेत्युच्यते । अपि चाह ।

भुवो जनस्य दिव्यस्य राजा
पार्थिवस्य जगतस्त्वेष संदृक् ।
धिष्व वज्रं दक्षिण इन्द्र हस्ते
विश्वा अर्जुर्य दयसे वि मायाः ॥

ऋक्संहिता ६. २२. ९

अत्र दक्षिणे हस्ते वज्रं धिष्वेत्युच्यते । तस्मात् सव्येनेति न साक्षादिन्द्रस्य स्वभाव इति वक्तुं शक्यः । तस्माद्यथोक्तं लिङ्गं साधु ।

इतश्च कुत्स एव प्रसिद्धोऽर्जुनः । अर्जुनः पाण्डोः पुत्र उच्यते । कुत्सः श्वित्रस्य । पाण्डुश्वित्रशब्दौ तुल्यार्थौ । वेदे कुत्सपितृत्वेन श्रुतः श्वितः इतिहासे तत्तुल्यार्थेन पाण्डुशब्देनोक्तः । ननु श्वित्रशब्दोऽवयवार्थेन श्वेतवर्णवाचकोऽपि श्वित्रनामके श्वेतत्वग्व्याधौ रूढः तस्मान्न पाण्डुना समार्थक इति चेत् । इदं साधकमेव न बाधकम् । पाण्डुरपि श्वेतव्याधिमानेव । पाण्डुशब्दस्यावयवार्थभूतः श्वेतो वर्णः यदि साधारणोऽभविष्यत् तर्हि तं मातृदोषोत्यं नावदिष्यदितिहासकारः । सवर्णस्त्वग्रोग एवेति दोषत्वेन कीर्तनादनुमातुं शक्यते । यदाह भारते-

भविष्यति सुविक्रान्तः कुमारो दिक्षु विश्रुतः।

पाण्डुत्वं वर्णतस्तस्य मातृदोषाद्भविष्यति।।

आश्वमेधिकपर्व ११. ५. २७

मातरं प्रति व्यासस्य वाक्यमिदम् । एवं श्वित्रपाण्डुशब्दौ तुल्यार्थौ । ननु श्वित्रपाण्डुशब्दौ पृथग्रोगवाचकौ वैद्यक इति चेत् । सत्यम् । तथापि अत्र वर्णमात्रेण पाण्डुत्वकथनान्नायं रक्तक्षयात्पाण्डुर्वर्णः । अपि तु त्वग्दोषात् । यदि स पाण्डुरोगी स्याद्विक्रान्तत्वं दूरे । श्वित्रिणस्तु शारीरशक्तिलोपाभावाद्विक्रान्तत्वं नानुपपन्नम् । नन्वेवमपि श्वित्रशब्दे रोगवाचक एव न तद्वद्वाचक इति चेत् । लक्षणयाऽवयवार्थयोगाद्वा तद्वद्वाचको भवति । आर्जुनेयस्य श्वित्रपुत्रत्वे प्रमाणं प्रकरणान्तरे दर्शयामः । एवमुक्तैर्बहुभिर्लिङ्गैर्वक्ष्यमाणैश्च कुत्स एव प्रसिद्धोऽर्जुनः । वक्ष्यमाणात्साक्षादर्जुननामवत्त्वलिङ्गाच्च ।

त्रयोदशं प्रकरणम्

## भगवान्कृष्ण इन्द्रस्यावतारः

निगमेषु कर्णार्जुनयोरुपालम्भाज्जयेतिहासो वैदिक इत्यस्माभिरवगतम् । योऽर्जुनस्य सारथिर्भूत्वा तं महारणाम्बुधिमुत्तारयामास स भगवान्कृष्णः कः । निगमेषु इन्द्र एव कुत्सस्य सारथिरभूदित्युच्यते ।

...वङ्क्षू वातस्य पर्णिना ।
वहकुत्समार्जुनेयं शतक्रतु... ॥

ऋक्संहिता ८. १. ११

यासि कुत्सेन सरथमवस्युस्तोदो वातस्य हर्योः... ।

ऋक्संहिता ४. १६. ११

वह कुत्समिन्द्र यस्मिञ्चाकंत्स्यूमन्यू ऋज्रा वातस्याश्वा ॥

ऋक्संहिता १. १७४. ५

वह शुष्णाय वधं कुत्सं वातस्याश्वैः ॥

ऋक्संहिता १. १७५. ४

वन्वानो अत्र सरथं यथाथ कुत्सेन... ॥

ऋक्संहिता ५. २९. ९

इन्द्राकुत्सा वहमाना रथेन... ॥

ऋक्संहिता ५. ३१. ९

त्वं रथं प्र भरो योधमृष्वमावो युध्यन्तं वृषभं दशद्युम् ॥

ऋक्संहिता ६. २६. ४

जयेतिहासस्थस्य भगवतः कृष्णस्य इत्यादिषु स्थाने निगमेषु

भगवानिन्द्रः कथ्यते । कृष्णो भूमौ जातः कश्चन पुरुषः । इन्द्रश्च देवता । कथमनयोरैकात्म्यम् । एवं संशये प्राप्ते ब्रूमः । कर्णार्जुन-सङ्ग्रामप्रकरणस्य इन्द्र इन्द्रस्य तेजोंऽशावतारपुरुषो भवति । तस्य नाम कृष्णः । अत्रैषा भवति ।

अयं चक्रमिषणत्सूर्यस्य
न्येतशं रीरमत्ससृमाणम् ।
आ कृष्ण ईं जुहुराणो जिघर्ति
त्वचो बुध्ने रजसो अस्य योनौ ॥

ऋक्संहिता ४. १७. १४

अयमिन्द्रः सूर्यस्य कर्णस्य चक्रं रथचक्रं इषणत् प्रैरयत् । रथात्पृथक् कृतवानित्यर्थः । ससृमाणं पलायमानं एतशं अर्जुनं निरीरमत् निवारितवान् । कृष्णः कृष्णनामा स इन्द्रः ईं कर्णं जुहुराणः कुटिलं चरन् आजिघर्ति क्षारयति पातयतीत्यर्थः । कुत्र त्वचः शरीरस्य बुध्ने मूलभूते अस्य रजसः भूलोकस्य योनौ स्थाने । सामान्यतो भूमिः सर्वशरीराणां प्रकृतिः । विशेषतः कर्णस्य । सहि अंशेन नारीत्वमापन्नायाः भूदेव्याः खलु पुत्रः । तत् पृथक् परिच्छेदे निरूपयिष्यामः ।

पूर्णस्य ऋग्वेदस्य भाष्यं कुर्वन्नपि इन्द्रस्य माहात्म्यमजानन् सर्वत्रापि सत्यार्थध्वंसनाय बद्धकङ्कणः सायणवर्गस्तु अत्रोत्तरार्धर्चमेवं व्याख्यातवान् । "जुहुराणः कुटिलं यथा भवति तथा संचरन् कृष्णः कृष्णवर्णो मेघः त्वचस्तेजसो बुध्ने मूलभूते रजसोऽस्य उदकस्य योनौ स्थाने अन्तरिक्षे स्थितं ईं एतमिन्द्रं आजिघर्ति आसिञ्चति । शत्रूणां प्रेरिताच्चक्रादे त्रस्तं चक्रं एतशस्य रक्षायै प्रैरयदिति मानवयुद्धसन्दर्भम् अङ्गीकृतवान् । य एतशं सूर्यस्य चक्रायुधाद्ररक्ष भगवान् स किल सूर्यादिशत्रुभिः प्रेर्यमाणाच्चक्रादेर्भीतः किलाभूत्तदा तं मेघो वर्षेण किल

निर्भयं चक्रे । वर्षेण ताप एव निवार्येत लोके न शत्रुभयम् अपि च जयादनन्तरं शत्रुभयवारणमित्यन्यच्चित्रम् । त्वक्शब्दस्तेजः पर्यायः किल । तत्तृतीयं चित्रम् । तेजसो मूलं सूर्यमण्डलमेव भवति नान्तरिक्षम् । तेजसो मूलमन्तरिक्षमिति नवः सिद्धान्तः । अस्य रजस इत्यत्र इदं शब्दयोगबलादयं लोक एव स्मार्यते । रजसो लोकपर्यायत्वे बहवः प्रयोगाः सन्ति निगमेषु । रजः शब्दस्योदके सुतरां विरलः प्रयोगः। इदं शब्दयोगिरजः उदकवाचकत्वेन भूमिस्थमुदकं कथयेन्नान्तरिक्षस्थम् । अपि चान्तरिक्षस्थ इन्द्रो मेघेन कथं सिच्येत । मेघमण्डलादधः किञ्चिद्वर्षेण निजं भयं व्यपोहितुं किमागत इन्द्रः । यथा कथञ्चिद्व्याख्यानपूरणायोद्युक्तस्य व्यख्यानं यद्यप्युपेक्ष्यं तथापि पण्डितवर्गस्य तत्र विश्वासादेतावद्वक्तव्यमासीत्।

अत्र जुहुराण इति विशेषणं "त्सरद्गन्धर्वमस्तृतम्" इत्यत्रोक्तां कुटिलगतिं स्मारयति। रथचक्रमञ्जनकर्णपातने एकेन कर्मणाऽभवताम् । तस्मिन्कर्मणि कुटिलगतिरावश्यकी । समगतौ रथाश्वा एव लक्ष्यं स्युः । कुटिलगत्यैव रथचक्रं प्रवर्हितुं शक्येत ।

घृ क्षरणदीप्त्योरिति धातुः । सामान्यतः क्षरतीत्यस्य यावानर्थः जिघर्तीत्यस्य तावातर्थः । "जिघर्म्यग्निं हविषा घृतेन।" इत्यत्र दीपयामि हविषा घृतेन चाग्निमित्यर्थः । न क्षरामीति । क्षरणं च सञ्चलनं तात्पर्यतो गलनं च सेचनं क्षराक्षरशब्दौ पश्यत । क्षर सञ्चलन इति धातुः । अत्र अन्तर्भावितणिच्कः प्रयोगः । तस्माज्जिघर्तीत्यस्यात्र च्यावयतीत्येवार्थः । मेघस्येन्द्रभयवारणद्वारा तद्रक्षणार्थे सेचने कुटिलगतेः किं स्वारस्यम् । तस्मात्कुत्स रक्षीन्द्रः कृष्णः । स्व नाम्नैवाधिनात् । अंशमूलपुरुषयोरभेदा-ध्यवसायादिन्द्रावतारं कृष्णमिन्द्र इत्येव निगमताः प्राहुः ।

इतश्च कृष्ण इन्द्रस्यावतारः । इतिहासे कृष्णः शौरिरुच्यते । शूरस्य पौत्र इति कृत्वा निगमे इन्द्रः शौरदेव्यइत्युच्यते । शूरदेव एव नामैकदेशेनामग्रहणमिति न्यायेन शूर उक्तः । इन्द्रस्य शौरदेव्यत्वं चावतारसम्बन्धादिति न पृथग्वक्तव्यम् । अत्रैषोदाहर्तव्या ।

कर्णगृह्या मघवा शौरदेव्यो वत्सं नस्त्रिभ्य आनयत् ।
अजां सूरिर्न धातवे।।

ऋक्संहिता ८. ७०. १५

शौरदेव्यः शूरदेवस्य गोत्रापत्यम् पौत्रत्वात् । मघवा इन्द्रः कृष्णवतारः नः अस्माकं वत्सं पुत्रं सूरिः प्रेरकः पशुपालः धातवे क्षीरपानाय क्षीरं दुग्ध्वा पातुमित्यर्थः । अजां न मेषीं न कर्णगृह्यकर्णे गृहीत्वा त्रिभ्यः त्रिभ्यो लोकेभ्यः सकाशात् आनयत् आनीतवान् ।उज्जीवितवानित्यर्थः । पृथिव्याः शरीरं अन्तरिक्षात्प्राणं दिवं सन्द्रियमात्मानं चेति त्रिभ्य इत्युक्तिः ।

मन्त्रकृत्पुरुहन्मा ऋषिरेवं भगवतो माहात्म्यं वर्णयति । एतन्मन्त्रलिङ्गमूलकमेव भगवते दशमस्कन्धस्योत्तरभागे एकोननवतितमे अध्याये परलोकगतविप्रपुत्रानयनकथानकम् । ननु तत्र विप्रपुत्राः बहव आनीता इत्यस्तीति चेत् । अत्राप्यस्ति ।

भूरिभिः समह ऋषिभिर्बर्हिष्मद्भिः स्तविष्यसे।
यदित्थमेकमेकमिच्छर वत्सान् परादद:।।

ऋक्संहिता ८. ७०. १४

इयमृक् कर्णगृह्येति ऋचः पूर्वा । अत्रापि स एव ऋषिः। अस्याः अयमर्थः। हे समह सर्वपूज्यत्वं भूरिभिः बहुभिः बर्हिष्मद्भिः बर्हिरुपलक्षितयागवद्भिः ऋषिभिः स्तविष्यसे स्तूयसे । यत् यतः हे शर शत्रुहिंसकः इत्यनेन प्रकारेण एकं एकमित् सर्वानिवेत्यर्थः सत्वान्

मम पुत्रान् पराददः परलोकादानीयाददः । मृतासनामुज्जीवनात् सर्वऋषिस्तुत्यो भवसीत्यर्थः । अस्यामृचि उक्तमेवार्थं उत्तरस्यामृचि परोक्षरीत्या वदति । तस्मात्तत्र वत्सशब्दो व्यत्ययेन बहुवचनार्थो ज्ञेयः ।

अयमेव पुरुहन्मा भागवते कुचेलः सुदामोक्त इत्यूहितुं शक्यम् । यदेवं स ऋषिः प्रार्थयते ।

त्वं न इन्द्रासां हस्ते शविष्ठ दावने।
धानानां न सङ्गृभायास्मयुर्द्विः सङ्गृभायास्मयुः।।

ऋक्संहिता ८. ७०. १२

हे शविष्ठ बलवन् हे इन्द्र त्वं नः दावने सम्पत्प्रदाने निमित्ते चतुर्थ्यर्थे सप्तमरवा हस्ते आसां मदानीतानामेतासां धानानां द्वितीयार्थे षष्ठी । न सम्प्रति अस्मयुः अस्मान्कामयमानः सङ्गृभाय सङ्गृहाण । धानाश्च भृष्टयवाः । धाना एव पृथका उक्ताः पुराणे ।

एतेषां त्रयाणां मन्त्राणां सायणीयव्याख्याऽयोमयी विद्यते ।

कर्णगृह्येति मन्त्रे शौरदेव्य इत्यस्य गा इत्यर्थः कृतः । दीव्यन्ति क्रीडन्ति इति देवाः योद्धारः शूराश्च ते देवाश्च शूरदेवाः वीरयोद्धारः तेषां हितं शौरदेवं युद्धम् । शौरदेवस्य सन्बन्धिन्यः शौरदेव्यः गावः शौरदेवीशब्दस्य बहुवचनम् । ताः गाः वत्सं वत्सांश्च वत्ससहितागा इत्यर्थः । मघवा कर्णगृह्य आनयत् आनयतु इति प्रार्थना । उपमानार्थः अस्मदुक्तिदिशौ वास्ति । अस्त्वर्थो यथा कथञ्चित् । शौरदेवीशब्दस्य बाव इत्यर्थकरणाय भाषासम्प्रदायसम्पूर्णोल्लङ्घनेन तेन यत्साहसं कृतं तच्छ्लाघ्यम् । ये क्रीडन्ति बालाः स्युः कथं योद्धारो भवेयुः । यौद्धी राणी सङ्ग्रामी साङ्गरी इत्यादीनि बहूनि गवां नामान्यनुगृहीतात्येतया व्याख्याया ।

युद्धसम्बन्धिनी गौरिति कथं प्रथमोपस्थितिः । रूढिं विना केवलं यौगिकार्थेन व्यक्तिबोधने स्पष्टेन निःसंशयेन च भवितव्यं तेनार्थेन ।

भूरिभिरिति मन्त्रे स्तोतृभ्यः इत्यध्याहृत्य तेभ्यः एकमेकमित् एकैकमिति प्रकारेण बहून् वत्सान् वत्सोपलक्षितावत्समातृः गाः परादद: प्रयच्छसी-त्यर्थः कृतः गोभिर्वत्सानामुपलक्षणं न्याय्यम् । वत्सैर्गवामुपलक्षणं विसंष्ठुलम् । एकमेकमिति इति शब्दः पूर्वं यावन्तो लुप्तास्तावताम् अन्विष्यानयने प्रत्यर्पणे वोपयोक्तुं योग्यः । केवलं दानकर्मत्वेन प्रयोगे। एकैकस्मै एकैकमित्येवार्थो भवेत् । तच्चातीव विरसम् ।

त्वं न इन्द्रासामिति मन्त्रे आसामित्यस्य बृद्धिस्थानां गवामित्यर्थः कृतः। धानानां नेत्यौपम्यम् । द्वितीयार्थे षष्ठी यथाऽस्माकम् । हे इन्द्र अस्मभ्यं दातुं गाः धाना इव हस्ते गृहाण द्विर्गृहाणेति तस्य तात्पर्यार्थः । बृद्धिस्थस्य यस्य कस्यचिदर्थस्य इदं शब्देनाभिधानमिति विचित्रः पन्थाः । इन्द्रः गाः धाना इव हस्ते गृहीत्वैव ददातीति चित्रोऽर्थः । नेत्यस्याव्ययस्य सम्प्रत्यर्थे चास्ति वृत्तिः ।

प्रकृतमनुसरामः। इतश्च कृष्ण इन्द्रवतारः। कृष्णो नन्दस्य गोपालस्य कृत्रिमः पुत्र इतीतिहासः । निगमे इन्द्रः गोपालस्य पुत्र उच्यते । यथा-

प्र ते बभ्रू विचक्षण शंसामि गोषणो नपात् ।
माऽऽभ्यां गा अनुशिश्रथः।।

ऋक्संहिता ४. ३२. २२

हे विचक्षण हे गोषणो नपात् गाः सनति सम्भजत इति गोपन् गोपालः तस्य पुत्र इन्द्र ते बभ्रू हरी अश्वौ शंसामि स्तौमि । आभ्यां अश्वाभ्यां गाः अस्माकं गाः माऽनुशिश्रथः मा हिंसीः । अत्र सूर्याचन्द्रमसाविन्द्रस्य

हरी । ताभ्यां मा हिंसीरित्युक्ते आतपतुषाराभ्यां यथा गवां नाशो न भवेत्तथा पालयेति तात्पर्यं स्यात् ।

सायणस्तु गोषणः गवां सनितः नपात् नपातयितः रक्षक इति पृथक् सम्बुद्धी कृत्वा व्याख्यातवान् । तत्र नपादिति कर्मणः सम्बन्धिनो योगं विना न क्वापि निगमेषु प्रयुक्तम् । तस्मात्सोऽर्थ उपेक्ष्यः ।

इतश्च कृष्ण इन्द्रस्यावतारः । कृष्णो वासुदेवः । इन्द्रो वासव इति रूढिः । वसुदेवश्च नामेकदेशग्रहणे वसुः तस्यापत्यं वासवः । वस्तुतस्तु ऐतिहासिकाः इतिहासस्य परोक्षभाषासम्प्रदायं रक्षन्तः शूरदेवं शूरमकार्षुः । नामैकदेशं हित्वा । वसुं वसुदेवमकार्षुः देवशब्दं संयोज्य । वसुः देव इव वसुदेव इत्यर्थं कर्तुं शक्नुम इति तेषां दृष्टिः । इन्द्र एव सनातनो नारायण ऋषिः यस्यावतारः कृष्णः कथ्यते जयेतिहासे । नाराः आपः अयनं यस्य स नारायण इति व्युत्पत्तिं वृद्धाः कुर्वन्ति । आपश्चान्तरिक्षगताः सूक्ष्मा एव । तद्वशादेवान्तरिक्षलोकोऽपां लोक उच्यते निगमेषु । ताश्चापः मध्यमस्येन्द्रस्य स्थानम् । तस्मादिन्द्र एवार्वाचां नारायणः । स पुरातन ऋषिश्च भवति । अत्रैतां पश्यत ।

ऋषिर्हि पूर्वजा अस्येक ईशान ओजसा ।
इन्द्र चोष्कूयसे वसुः ।।

ऋक्संहिता ८. ६. ४१

इन्द्रश्च हरिः। शब्दमाश्रित्य हरिवंशः प्रवृत्तः । यदाह-

सो अस्य वज्रो हरितो य आयसो हरिर्निकामो हरिरा गभस्त्योः।
द्युम्नी सुशिप्रो हरिमन्युसायक इन्द्रे नि रूपा हरिता मिमिक्षिरे ।।

ऋक्संहिता १०. ९६. ३

चतुर्दशं प्रकरणम्

# वैकुण्ठ एव कृष्णः

ज्ञातं कुत्सस्य सारथित्वादन्यैर्लिङ्गैश्च कृष्ण इन्द्रस्यावतार इति । स च कृष्णः कुत्सादीनां समकालिकश्चेन्निगमेषु तस्य मन्त्राश्चोपलब्धव्याः । यथा कुत्सस्य । तादृशो महानवतारपुरुषो मन्त्रद्रष्टा तस्मिन् काले न भवति चेदनृषिरेव स्यात् । अनृषेः कुतः प्रभावः । इति निगमकालिक-महापुरुषतत्त्वविदां संशयो जायेत । स च संशयो निवारयितव्यः । कृष्णश्च न मन्त्रद्रष्टा न ऋषिः । तं वैकुण्ठमाहुः । ऋक्संहितायां वैकुण्ठस्यार्षाणि त्रीणि सूक्तानि दृश्यन्ते । तत्र द्वयोः सूक्तयोर्वैकुण्ठ आत्मानमेवेन्द्रत्वेन स्तुतवान् । तृतीये सूक्ते इन्द्रं अन्यमिव स्तुतवान् । आत्मन इन्द्रस्यांशावतारत्वादात्मन इन्द्रत्वेन स्तुतिः । अंशांशिनोर्भेददृष्ट्याऽन्यवत्स्तुतिः ।

सर्वानुक्रमणिकायां कात्यायनः वैकुण्ठं प्रत्येवमुक्तावन् । "जगृम्भाष्टौ ससगुर्वैकुण्ठमिन्द्रं तुष्टाव ससमगुस्तुतिसंहृष्टआत्मनमुत्तरैस्त्रिभिस्तुष्टाव ।" इति साक्षादिन्द्रस्य वैकुण्ठनामत्वं न क्वाप्यन्यत्र प्रसिद्धम् । कथमिन्द्रो वैकुण्ठ इति चेत् । बृहद्देवतोक्तमनुसृत्यात्र सायण एवं वदति "विकुण्ठानामासुरस्त्री सा चेन्द्रसदृशं पुत्रं कामयमाना कृच्छ्र-चान्द्रायणादिकं तपस्तेपे । मत्सदृशोऽन्यो मा जनिष्टेति बुध्वा इन्द्र एव तस्याः पुत्रो जातः ।" इति । विकुण्ठाया अपत्यं वैकुण्ठ इति व्युत्पत्तिः । एष च विकुण्ठा असुरकन्येति प्राचामैतिहासिकानां दृष्टिः ।

भारतेतिहासे या देवकी कृष्णमातोच्यते सा चासुरकन्येति न वक्तुमशक्यम् । यतः सा कंसस्य भगिनी पितृव्यपुत्री । कंसस्य ज्येष्ठपितृव्यो हि देवक्याः पिता देवकः ।

अत्रेमे भागवतपुराणश्लोकाः ।

तस्याहुकश्चाहुकीच कन्याचैवाहुकात्मजौ ।
देवकश्चोग्रसेनश्च चत्वारो देवकात्मजाः ।।
देववानुपदेवश्च सुदेवो देववर्धनः ।
तेषां स्वसारः सप्तासन्धृतदेवादयो नृप ।।
शन्तिदेवोपदेवा च श्रीदेवादेवरक्षिता ।
सह देवादेवकी च वसुदेव उवाहताः ।।
कंसः सुनामा न्यग्रोधः कङ्कः शङ्कुः सुहूस्तथा ।
राष्ट्रपालोऽथ सृष्टिश्च पुष्टिमानौग्रसेनयः ।।
कंसा कंसवती कङ्काशूरभूराष्ट्रपालिका ।
उग्रसेनदुहितरो वसुदेवानुजस्त्रियः ।।

भागवतपुराणम्, नवमस्कन्दः २४. २१-२५

अन्यत्र च सन्दर्भे भागवते सूचितम् । कंस उग्रसेनपुत्रः देवकी देवकस्य पुत्रीति ।

उग्रसेनसुतः कंसः स्वसुः प्रियचिकीर्षया ।
रश्मीन् हयानां जग्राह रौप्यैरथशतैर्वृतः ।।
चतुःशतं परिबर्हं गजानां हेममालिनाम् ।
अश्वानामयुतं सार्धं रथानां च त्रिषट्छतम् ।।
दासीनां सुकुमरीणां द्विशते समलङ्कृते ।
दुहित्रे देवकः प्रादादुहितृतत्सलः ।।

भागवतपुराणम्, दशमस्कन्दः १. ३०-३२

कंसः असूरयूथपतीनां पतिरुक्तो भागवते ।

प्रलम्बबकचाणूरतृणावर्तमहाशनैः ।
मुष्टिकारिष्टद्विविदपूतनाकेशिधेनुकैः ॥
अन्यैश्चासुरभूपालैर्बाणभौमादिभिर्युतः ।
यदूनां कदनं चक्रे बलीमागधसंश्रयः ॥
ते पीडिता निविविशुः कुरुपाञ्चालकैकयान् ।
शाल्वान् विदर्भान्निषधान् विदेहान् कोसलानपि ॥

भागवतपुराणम्, दशमस्कन्दः २. १-३

अत्र प्रलम्बादयो धेनुकान्ताः कंसस्याज्ञाकारिणो योधाः । इतरे सखायः । एतावन्तो महामाया असुरा अनुसरस्य किङ्कराः भवन्तीत्यश्रेद्धेयम् । अन्धकस्तालजङ्घवद्यदुवंशे पठितोऽपि केनापि हेत्वन्तरेणासुर-वंशकृदासीदित्यवगम्यते । यदन्धकस्यासुर इत्येव प्रसिद्धिः पुराणेषु । अन्धक एवाहुकवंशस्य कूटस्थः पुरुषः कथ्यते ।

निगमे चासुरबधप्रकरणे देवकस्य वधश्च पठ्यते । पश्यतैतामृचम् ।

न त इन्द्र सुमतयो न रायः सञ्चक्षे पूर्वा उषसो न नूत्नाः ।
देवकं चिन्मान्यमानं जघन्था अव त्मना बृहतः शम्बरं भेत् ॥

ऋक्संहिता ७. १८. २०

अत्रेयं सायणव्याख्या । हे इन्द्र तव पूर्वाः पुरातनाः सुमतयः शोभनमतयः रायो धनानि च उषसो न उषस इव न सञ्चक्षे सङख्यातुं न शक्याः । न नूत्नाः नूतनाश्च सुमतयो रायश्च न सञ्चक्षे । किंच त्वं मान्यमानं मन्यमानस्य पुत्रं देवकं देवकनामानं शत्रुं जघन्थ अवधीः । त्मना स्वयमेव बृहतो महतः शैलात् शम्बरं च अवभेत् अवभैत्सीरिति ।

नन्वत्र मन्यमानपुत्रो देवकः नाहुकपुत्र इति चेत् । अन्धकवंशजोऽन्य एवाहुकान्मन्यमानः स्यात् । यस्य गोत्रापत्यं देवकः । मान्यमानस्य देवकस्यान्यस्यासुरस्य पुराणेष्वप्रसिद्धेः । प्रसिद्धो देवक एवात्र मान्यमानो देवको ग्राह्यः। अप्राधान्याद्देवकस्य मान्यमानस्य पुराणेष्वप्रसिद्धिरिति चेत् । नाप्राधान्यं मन्यमानानां (मन्यमानवंश्यानाम्) यन्निगम एव मन्यमानानां प्राधान्यमेवं वक्ति ।

यद्योधया महतो मन्यमानांत्साक्षाम तान्बाहुभिः शाशदानान् ।
यद्वा नृभिर्वृत इन्द्राभियुध्यास्तं त्वयाऽऽजिं सौश्रवसं जयेम ।।

ऋक्संहिता ७. ९८. ४

अत्रेयं सायणव्याख्या । हे इन्द्र महतः प्रभूतान् मन्यमानान् शत्रून् यद्यदा योधयाः अस्मदीययैर्योधयैः तैः सह योद्धुं बलं प्रयच्छेरित्यर्थः । तदानीं शाशदानान् हिंसतः तान् शत्रून् बाहुभिः आयुधनिरपेक्षैर्हस्तैरेव त्वत्प्रसादात् साक्षाम सहेम अभिभवेम । यद्वा यदि वा नृभिर्नेतृभिर्मरुद्भिर्वृतः त्वमेवाभियुध्याः अस्मदीययान् शत्रून् अभियुध्य । सौश्रवसं श्रवोऽन्नं यशो वा शोभनस्य श्रवसो हेतुं तमाजिं सङ्ग्रामं त्वया सहायेन वयं जयेम ।

उदाहृतौ द्वावपि मन्त्रौ भगवतो वसिष्ठस्य महर्षेरार्षौ । तत्र द्वितीयमन्त्रे मन्यमानान् आत्मनः शत्रून् वदति ऋषिः । ये वसिष्ठस्यापि भयङ्कराः शत्रवो महान्तस्तेषामप्राधान्यं वक्तुमशक्यम् । वसिष्ठस्य शत्रवो नाम वसिष्ठो यस्य यज्ञः पुरोहितस्तस्य शत्रव इति वक्तव्यम् । वसिष्ठस्य याज्यः सुदाः निगमेषु प्रसिद्धः । सुदासः पिता पिजवनो वा । पिजवनसुदासोरन्यतरेण देवकपुरःसराणां मन्यमानानां युद्धं प्रासम् । तत्रेन्द्रानुगृहीतेन सुदासापि जवनेन वा देवको हत इति मन्त्रद्वयार्थपर्यालोचनागवम्यते। प्रायः सुदासैव देवको हत इत्यनुमातुं

शक्यम् । सुदासः शत्रवो ये दशराजानः कीर्तिताः तेषु भेदो नामासुर एकः स्पष्टः । देवकश्च तेषामन्यतमः स्यात् । यद्यमुनात रेसुदासः शत्रुभिः सह युद्धं वर्णितं तस्मादिदमवसीयते । यमुनातीरस्था मधुरा हि देवकस्य राजधानी । सैषाभवती यत्र तद्युद्धं वर्णितम् ।

आवदिन्द्रं यमुना तृत्सवश्च प्रात्र भेदं सर्वताता मुषायत् ।
अजासश्च शिग्रवो यक्षवश्च बलिं शीर्षाणि जभ्रूरश्व्यानि ॥

ऋक्संहिता ७. १८. १९

अयं च मन्त्रो देवकवधाभिधायकान्मन्त्रात्पूर्वः । तच्च लिङ्गं सुदासः शत्रुर्देवकः असिमन्नेव युद्धे सम्बद्ध इति च । अत्रेयं सायणव्याख्या- अत्रास्मिन् सर्वताता सर्वतातौ युद्धे यः इन्द्रो भेदं नास्तिकं भेदनामकं वा सुदासः शत्रुं प्रमुषायत् अवधीदित्यर्थः । तमिन्द्रं यमुना आवत् अतोषयत् तत्तीरवासिजनः सर्वोऽप्यतोषयदित्यर्थः । तृत्सवः तृत्सोः पुरुषाश्च आवत् आवदित्येकवचनं बहुवचनान्ततया विपरिणतं तदत्र सम्बध्यते। किंच अजासः अजाजनपदाः शिग्रवो जनपदाः यक्षवश्च जनपदाः अश्व्यानि अश्वसम्बन्धीनि शीर्षाणि शिरांसि युद्धे हतानामश्वानां शिरांसीत्यर्थः । बलिमुपहारं तस्मै इन्द्राय जभ्रुः उपजह्रुः।

प्रायः सपुत्रस्य देवकस्य हतत्वादेव तदनुज उग्रसेनो राजाऽभूत् । देवकीविवाहसमये देवक एव राजेति ज्ञायते यदि तद्वत्तं हरणं पश्यामः । अनन्तरमकस्मादुग्रसेनो राजाऽभूत् । तस्मात्तत्रास्मदुक्तैवोपपत्तिः । राजा भवन्नुग्रसेन आर्याणां वशंवदोऽभूत् । तच्चासहमानः कंसः पितरं वध्वा स्वयं राजा भूत्वा पुनरार्यैः सह कदनं चक्रे । जिगायचतान् । सेयं च कथा कृष्णोत्पत्तेः प्राक् । आर्याश्च तं देशं हित्वा नानादिग्भ्यः पलायिता इति भागवतादुदाहृतेभ्यः श्लोकेभ्यो गम्यते ।

किं पर्यवसन्नम्। असुरो देवकः । तस्य दुहितैव विकुण्ठा । देवकस्यापत्यत्वात्तस्याः देवकीति नामायातम् । प्राचां भाषायां एकवचनद्विवचनयोरपि अपत्यप्रत्ययस्य लोपो दृश्यते । रुद्रस्य पुत्रौ रुद्रावश्विनौ । कवेः पुत्रः कविरुशना । अत्रेः पुत्रोऽत्रिः कुमरः आत्रेयः । एवं देवकस्य पुत्री देवकी । अथवा दैवकीपदं प्राकृते देवकीपदमासीत् । तत्तेनैव स्वरूपेण संस्कृतमारूढम् । प्राचीनात्प्राकृतात्पाणिनीयं संस्कृतं ह्यर्वाचीनम् ।

वैकुण्ठशब्दस्य कृष्णस्य नामसूपलब्धिश्चात्र लिङ्गम् । तस्मादयं चक्रमिषणदित्यत्र कीर्तित इन्द्रः कृष्णो वैकुण्ठ इन्द्र एव भवति । तस्मान्मन्त्रद्रष्टा च सः।

अन्यः कृष्णो नाम मन्त्रद्रष्टा विद्यते । स पाण्डवानां पितामहो द्वैपायनस्थानीय इत्यस्माकं दृष्टिः ।

पञ्चदशं प्रकरणम्

# द्रप्सकृष्णौ भिन्नौ

मारुतस्मद्युतानस्यार्षे सूक्ते तृच एको दृश्यते ।

अव द्रप्सो अंशुमतीमतिष्ठ दियानः कृष्णो दशभिः सहस्रैः ।
आवत्तमिन्द्रः शच्या धमन्तमप स्नेहितीर्नृमणा अधत्त ।।
द्रप्समपश्यं विषुणे चरन्तमुपह्वरे नद्यो अंशुमत्याः ।
नभो न कृष्णमवस्थिवांसमिष्यामि वो वृषणो युध्यताजौ ।।
अध द्रप्सो अंशुमत्या उपस्थेऽधारयत्तन्वं तित्विषाणः ।
विशो अदेवीरभ्याचरन्तीर्बृहस्पतिना युजेन्द्रः ससाहे।।

ऋक्संहिता ८. ९६. १३-१५

अत्र तृचे द्विधा कथमाहुः । केचित्कृष्णो नामासुरोंऽशुमत्यास्तीरे दशसहस्रसैन्ययुतस्तिष्ठन्निन्द्रेण बृहस्पतिसहायेन हत इत्याहुः । तन्मते द्रप्स इति कृष्णासुरस्य विशेषणम् । अपरे सोमेन्द्रयोर्युद्धमत्र वर्णितमिति कथयन्ति । तन्मते द्रप्सः सोमः कृष्ण इतीन्द्रस्य विशेषणम् । सोमस्य कृष्णत्वासम्भवात् । प्रथमं पक्षं सायणः शिश्रिये । द्वितीयं पक्षं वयं श्रयामहे । उभयत्रापि कथास्वरूपं तृच एच विद्यत इति नातःपरं किमपि कल्पनीयम् । यदि द्रप्सः कृष्ण एव स्यात्सायणव्याख्यानुसारेण द्वितीयो मन्त्र इन्द्रस्य वाक्यम् । तदा यस्य वाक्यं स ऋषिरिति तस्य मन्त्रस्येन्द्र ऋषिः प्रसज्येत । अन्यच्च तत्र मन्त्रे प्रार्थिताः देवताः मरुतः । न केवलं चतुर्थे पादे। पूर्णे च मन्त्रे । अंशुमत्या कृष्णावस्थिति-

कथनस्य प्रार्थनाङ्गत्वात् । तस्मात् पूर्णस्य तस्य मन्त्रस्य मरुतो देवताः प्रसज्येरन् । पूर्वपादत्रयस्येन्द्रो देवतेति कथं सङ्गच्छेत । यदि कृष्णस्यावस्थिति-कथनं न प्रार्थनाङ्गं तर्हि या तेनोच्यते सा देवतेति न्यायेन कृष्णासुरः पूर्वपादत्रयस्य देवता प्रसज्येत । अपि च द्रप्सशब्दो विमते इतरसाध ारणं यौगिकं विशेषणम् । कृष्णशब्द एवासुरस्य वाचकः । एवं स्थिते तृतीये मन्त्रे कृष्णशब्दं विहाय द्रप्स शब्देनैवासुरस्योक्तिः कुतः । एतैः कारणैः कृष्णासुरस्यान्यत्राप्रसिद्धत्वाच्चान्यत्रेन्द्रस्य कृष्णत्वेन कीर्तनाच्च कृष्ण इन्द्रः द्रप्सोऽसुर इति वक्तुं युक्तम् । अत्र नये ऋचामयमर्थः ।

(१) द्रप्सोऽसुरः सोमांशजत्वादस्यासुरस्य द्रप्स इति नाम । अंशुमतीमेतन्नामिकां नदीमवातिष्ठदाक्रान्तवान् । अनन्तरं कृष्ण कृष्णावतारः इन्द्रः दशिभिः सहस्रैः सैन्यैः इयानः सन् शच्या कर्मणा धमन्तं श्वसन्तं पराक्रममाणमिति लक्ष्यार्थः तं द्रप्सासुरं आवत् प्राप्नोत् । नृमणाः नृषु मनो यस्य सः मरुत्प्रिय इत्यर्थः । अत्र नृमणः शब्दस्य कृष्णपरत्वान्मरुदवतारभूताः पाण्डवा अत्र नृशब्देनोच्यन्त इति बोध्यम् । तादृशः कृष्णः स्नेहितीः हिंसिकाः शत्रुसेनाः अपाधत्त आच्छादितवान्।

(२) नद्याः अंशुमत्याः उपह्वरे गुप्ते तीरस्थाने विषुणे विषमप्रदेशे चरन्तं सञ्चरन्तं द्रप्सं द्रप्सासुरं नभो न मेघमिव अवतस्थिवांसं आक्रम्य तिष्ठन्तं कृष्णं भगवन्तं शौरदेव्यं अहमपश्यमिति ऋषिरेव वदति । हे वृषणः अस्त्रबलात् तेजसां वर्षितारो मरुतः वः इष्यामि इच्छामि आजावस्मिन् युद्धे यूयं चागत्य युध्यतः । एवं प्रायः पाण्डवा एवाहूयन्ते ऋषिणा । अन्ये वा मरुदंशभूता यादवाः । अस्मिन्नर्थे पूर्वे त्रयः पादा ऐन्द्रा भवन्ति ।

(३) अध कृष्णाक्रमणादनन्तरं अंशुमत्याः उपस्थे समीपे द्रप्सः तन्वं तितिष्वाणः सन् क्रोधेन ज्वलन्नित्यर्थः । अधारयत् शत्रोः कृष्णस्य सेनाः प्रत्यगृह्णात् । अभ्याचरन्तीः अभिचारं कुर्वाणाः निजतान्त्रिकास्त्र-बलेन युध्यन्तीरित्यर्थः । अदेर्वाः ब्रह्मणा युजा सहायेन निजास्त्रबलेनेत्यर्थः ससाहे अभिभूतवान् जितवानित्यर्थः ।

यथा रसशोषक आदित्यतेजोंऽशः शुष्ण उच्यते । तथा तुषारात्मकश्चन्द्र-तेजोंऽशो द्रप्स उच्यते । द्रप्सस्य जलकणवाचकत्वात् । कस्तदंशः कृष्णस्य काले । जरासन्ध इति ब्रूमः । जरया वृद्धावस्थया सन्धीयत इति जरासन्धश्चन्द्रः । चन्द्रस्य वृद्धावस्था च पौर्णम्यात् । तदैवहि स सन्धीयते यथा पूर्णशरीरः स्यात् । चन्द्रश्च पितृलोकः पितॄणां च पतिर्यमो भैरवापरपर्यायः । एवं जरासन्धस्य भैरवोपासनो पपत्तिः।

किं पर्यवसन्नम् । द्रप्सो जरासन्धः । कृष्णो भगवान् वैकुण्ठः । नासूरः । स चेन्द्रस्यावतारः । ऐन्द्रे तत्प्रस्तावादिन्द्रकृष्णपदयोः सामानाधिकरण्याच्च ।

षोडशं प्रकरणम्

इतरलिङ्गानि

## कृष्णार्जुनयोः सरूपत्वम्

इतिहासे कृष्णार्जुनौ तुल्यरूपाविति वर्तते । अत एवार्जुनस्यापि कृष्ण इति नामान्यत्प्रसिद्धम् । "कृष्णावेकरथे स्थितौ" इत्यादयः प्रयोगा अत्र द्रष्टव्याः । निगमे चायं विषयो दृश्यते ।

आ दस्युघ्ना मनसा याह्यस्तं
भुवत्ते कुत्सः सख्ये निकामः ।
स्वे योनौ निषदतं सरूपा
वि वां चिकित्सदृतचिद्ध नारी ॥

ऋक्संहिता ४. १६. १०

हे दस्युघ्ना दसयुहन्तारौ इन्द्राकुत्सौ मनसा प्रीत्या अस्तं गृहं आयाहि भूतार्थे लोट् द्विवचनस्य व्यत्ययेनैकवचनं आयातम् । ते निकामो नितरां कमनीयः कुत्ससख्ये भुवत् अभूत् । स्वे निजे योनौ स्थाने सरूपा समानरूपौ युवां निषदतं उपाविशतम् । ऋतचित् सत्यदर्शना नारी ह इन्द्राणी वां युवां विचिकित्सत् कः कुत्सः को मे भर्तेति संशयं चक्रे ।

### सत्यैवेन्द्राणी

येयमुक्ताऽत्रेन्द्राणी नारी सा सत्या। अत्र मन्त्रे ऋतचिदिति पदमादाय ऐतिहासिकास्तत्समार्थकेन सत्यापदेन तां देवीमाहुः । अन्या चात्र भवति।

संहोत्रं स्म पुरा नारी समनं वाव गच्छति ।
वेधा ऋतस्य वीरिणीन्द्रपत्नी महीयते विश्वस्मादिन्द्र उत्तरः।।

ऋक्संहिता १०. ८६. १०

ऋतस्य वेधाः ऋतस्य कर्त्री । सत्यक्रियेत्यर्थः । यस्याः ज्ञानं सत्यं कर्म च सत्यं स सत्यनामतो युक्तं कृता । इयं च भगवती सत्यादेवी मन्त्रद्रष्ट्री भवती । द्वयोः सूक्तयोरेषा ऋषिका । अन्यत्र सूक्ते संवादभाक् । एतस्य आर्षे सूक्तद्वये एकं सूक्तं पतिवशीकरणार्थौषधिस्तुतिरूपम् (१०-१४५) सा चौषधिरुत्तानपर्णा सहमानापरपर्याया । तयौषध्या पत्यः शिरसि लेपः प्रयोगः । अत्रेयं भवति ।

उप तेऽधां सहमानामभि त्वाऽधां सहीयसा ।
मामनु प्र ते मनो वत्सं गौरिव धावतु पथा वारिव धावतु ।।

ऋक्संहिता १०. १४५. ६

हे भर्तः सहमानां उपाधां उपधानमकरवम् । शिरस्य लिम्पमित्यर्थः । सहीयसा औषधेन त्वां अभ्यधां अभिदधामि । किमित्युच्यते । ते मनः मामनु गौः वत्समिव प्रधावतु वाः उदकं पथेव निम्नेनेव प्रधावतु ।

एतेन भारतोक्तः सत्या द्रौपदीसंवादः स्मार्यते। तत्र सूक्ते अन्याचात्रोदाहर्तव्या ।

उत्तानपर्णे सुभगे देवजूते सहस्वति ।
सपत्नीं मे परा धम पतिं मे केवलं कुरु ।।

ऋक्संहिता १०. १४५. २

सुभगे सौभाग्यहेतुभूते सहस्वति बलवति देवजूते देवप्रेरिते उत्तानपर्णे मे सपत्नीं पराधम। पतिं मे मम केवलं अधीनमित्यर्थः। कुरु।

एतेन सत्यारुक्मिणीकलहः स्मार्यते ।

भौमौषधिस्तुतेः इयं ऋषिका भूमौ जाता इन्द्राण्या अवतारभूतैव स्यात् न साक्षादिन्द्राणी ।

इतरसूक्तं (१०-१५९) इन्द्रण्या आत्मस्तुतिः । अत्र चरित्रोपयुक्तास्तिस्त्र उदाह्रियन्ते ।

अहं केतुरहं मूर्धाऽहमुग्रा विवाचनी ।
ममेदनु क्रतुं पतिः सेहानाया उपाचरेत् ।।

ऋक्संहिता १०. १५९. २

अत्रोग्रशब्दो बीजं सत्यां भामेति वक्तुम् । भामा नाम कोपना । उग्रा च तदर्थकः शब्दः ।

मम पुत्राः शत्रुहणोऽथो मे दुहिता विराट् ।
उताहमस्मि सञ्जया पत्यौ मे श्लोक उत्तमः ।।

ऋक्संहिता १०. १५९. ३

समजैषमिमा अहं सपत्नीरभिभूवरी ।
यथाहमस्य वीरस्य विराजानि जनस्य च ।।

ऋक्संहिता १०. १५९. ६

एतेन कृष्णस्य बहुपत्नीकत्वं सूच्यते । संहोत्रस्मेति मंत्रे समनं वावगच्छतीत्यनेन नरकयुद्धयात्रासूचनम् । इयमेव देवी पौलोमी । पुलोम्नस्तनया । अयं च पुलोमा नामान्तरेण सत्राजित्स्यात् ।

## रुक्मिणीहरणलिङ्गम्

अस्ति रुक्मिणीहरणे च लिङ्गम् । पश्यैतामृचम् ।

वधूरियं पतिमिच्छन्त्येति य ईं वहाते महिषीमिषिराम् ।
आऽस्य श्रवस्याद्रथ आ च घोषात्पुरुसहस्त्रा परि वर्तयाते ।।

ऋक्संहिता ५. ३७. ३

इयं वधूः पतिमिच्छन्ती एति आयाति । एतेन रुक्मिण्याः गौरीपूजाव्याजेन पथ्यर्थं वीथ्यामागमनं स्मार्यते । य इन्द्रः ईं इमां इषिरां नामतः महिषीं महतीं वहाते गृहीत्वा रथमारोपयतीत्यर्थः । अस्य इन्द्रस्य रथः आ समन्तात् श्रवस्या कीर्तिकामनया आ समन्तात् घोषात् पुरु सहस्रा बहूनि सहस्राणि शत्रुसैन्यानीति यावत् परिवर्तयाते निवर्तयति । रथ इत्युपलक्षको रथिनः । इषोऽन्नानि तद्वती इषिरा इति नाम्नो व्युत्पत्तिः । इषश्च लक्षणया धनानि तस्माद्रुक्मिणीपदं पौराणिकानामिषिरापदमूलम् ।

## काळियमर्दनलिङ्गम्

अस्ति निगमे काळियमर्दनस्य च लिङ्गम्। पश्यतैतामृचम् ।

त्वं कुत्सं शुष्णहत्येष्वाविथाऽरन्धयोऽतिथिग्वाय शम्बरम् ।
महान्तं चिदर्बुदं नि क्रमीः पदा सनादेव दस्युहत्याय जज्ञिषे ॥

ऋक्संहिता १. ५१. ६

हे इन्द्रं त्वं शुष्णहत्येषु शुष्णहत्याक्रियासु कुत्सम् आविथ अरक्षः । अतिथिग्वाय दिवोदासाय शम्बरं शम्बरासुरं अरन्धयः वशंवदमकरोः । महान्तं चित्महान्तमपि अर्बुदं अर्बुः शोफः दंशेनार्बुं ददातीत्यर्बुदः सर्पविशेषः पदापादेन निक्रमीः अमर्दयः सनादेव चिरादेव दस्युहत्याय दस्युवधाय जज्ञिषे जोतो भवसि ।

अर्बुदो मेघ इति नैरुक्तानां व्याख्यानम् । अत्र शुष्णशम्बरसहपाठ-लिङ्गात्पदानिक्रमणलिङ्गाच्च नार्बुदो मेघः । उत्तरत्र दस्युहत्याय जज्ञिष इति वचनं चात्र लिङ्गम् ।

अर्बुदशब्दस्य सर्पवाचकत्वादेवाथर्ववेदे नागास्त्रदेवताऽर्बुदिरुच्यते । यथा-

उतिष्ठ त्वं देवजनार्बुदे सेनया सह ।
भञ्जन्नमित्राणां सेनां भोगेभिः परिवारय ।।

अथर्ववेदसंहिता ११. ९. ३

अत्र भोगेभिरित्युक्तेरर्बुदिः सर्पः । नन्वर्बुदिशब्द एव सर्पवाचको नार्बुदशब्द इति चेत् । अर्बुं ददातीत्यर्बुदः । अर्बु दीयतेऽनेनेति अर्बुदिरम्बुधिवत् । एवमर्बुदार्बुदिशब्दौ तुल्यार्थकौ ।

अन्या च भवत्यर्बुदमर्दने।

अध्वर्यवो य उरणं जघान नव चख्वांसं नवतिं च बाहून् ।
यो अर्बुदमव नीचा बबाधे तमिन्द्रं सोमस्य भृथे हिनोत ।।

ऋक्संहिता २. १४. ४ गृत्समदः

यः अर्बुदं नीचा अधः कृत्वा अवबबाधे मर्दितवान् । पदेत्यर्थाल्लभ्यते ।

अन्य च भवत्यर्बुदमर्दने-

न्यर्बुदस्य विष्टपं वर्ष्माणं बृहतस्तिर।
कृषे तदिन्द्र पौंस्यम्।।

ऋक्संहिता ८. ३२. ३

हे इन्द्र बृहतः अर्बुदस्य विष्टपं विष्वक्तपन्तं विष्वक् तपने विषश्वासाः कारणं भवन्ति । वर्ष्माणं शरीरं नितिर अबाधिषि भूतार्थे लोट् । तत्पौंस्यं पराक्रमं च कृषे अकार्षीः ।

## बाणविजयलिङ्गम्

अस्ति बाणविजये लिङ्गं च । तत्रैषा भवति ।

अपिबत्कद्रुवः सुतमिन्द्रः सहस्रबाह्वे ।
अत्रादेदिष्ट पौंस्यम् ।। ऋक्संहिता ८. ४५. २६

इन्द्रः कद्रुवः कद्रुनामकस्य ऋषेः राज्ञो वा सुतं सोमं अपिबत् । किमर्थं सहस्रबाह्वे सहस्रबाहुं जेतुमित्यर्थः ।

"क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इत्यप्रयुज्यमानस्य तुमुनः कर्मणि चतुर्थी । अत्र सहस्रबाहुयुद्धे पौंस्यं इन्द्रस्य पराक्रमः अदेदिष्ट अदिप्यत । ननु बाणयुद्धमनिरुद्धरक्षणाय न कद्रुरक्षणायेति चेत् । एक क्रिया द्व्यर्थकरी कुतो माऽभूत् । कद्रुश्च बाणबाधितः कश्चिदृषिः स्यात् । राजा वा । अपरः पृच्छत्ससङ्गमं मनुष्यस्य सहस्रबाहुत्वमिति । युद्धेषु मायाबलेन तत्सङ्गतं स्यादित्यविरोधः । सायणस्तु सहस्रबाह्वे इत्यस्य सहस्रबाह्वेरित्यर्थं कृत्वा तस्य शत्रूंश्चाहन्निति पदद्वयमध्याहरति । कद्रुसुतपानस्य सहस्रबाहुशत्रुहननस्य च सम्बन्धमपि न वदति । तत् क्लिष्टं व्याख्यानमुपेक्ष्यम् ।

## कंसवधलिङ्गम्

निगमेषु भगवता कृतो व्यंसनामकस्यासुरस्य वधः श्रूयते । तत्कंस-वधस्य लिङ्गम्। विकृतोंऽसो यस्य स व्यंसः कुत्सितोंसो यस्य स कंसः इत्युभयोः शब्दयोर्निर्वचनस्य तुल्यत्वात् । व्यंसवधप्रस्तावस्थः काश्चिदृच उदाह्रियन्ते ।

यो व्यंसं जाहृषाणेन मन्युना यः शम्बरं यो अहन् पिप्रुमव्रतम्।
इन्द्रो यः शुष्णमशुषं न्यावृणङ् मरुत्वन्तं सख्याय हवामहे।।

ऋक्संहिता १. १०१. २

अध्वर्यवो यः स्वश्नं जघान यः शुष्णमशुषं यो व्यंसम् ।
यः पिप्रुं नमुचिं यो रुधिक्रां तस्मा इन्द्रायान्धसो जुहोत ।।

ऋक्संहिता २. १४. ५

इन्द्रो वृत्रमवृणोच्छर्धनीतिः प्र मायिनाममिनाद्वर्पणीतिः ।
अहन्व्यंसमुशधग्वनेष्वाविर्धेना अकृणोद्राम्याणाम् ।।
ऋक्संहिता ३. ३४. ३

पूर्वयोः ऋचोर्व्यंसवधमात्रोल्लेखः । तृतीयायामस्ति विशेषः ।

उशधक् कामं दहंत्सन् व्यसं अहन् हतवान् । वनेषु गूढानां राम्याणां रम्याणां पुरुषाणां धेनाः वाचः आविरकृणोत् प्रकटीकृतवान् । यत्र यत्र रमणीयः पुरुषो दृश्यते कृष्णतुल्यवयाः स सर्वोऽपि कंसस्य वधार्हो बभूव कृष्णभ्रमात् । अतः रमणीयाः कृष्णसमवयस्काः सर्वेऽपि तद्रक्षकैर्वनेभ्यो नीताः । कंसवधादनन्तरं तेषां निर्भयानां वाचः प्रकटा अभूवन् । तावन्तं कालं कंसभयान्निःशब्दा गूढास्तदा सन्तोषेण व्याहरन्तः प्रकटा अभूवन्नित्यर्थः । रम्याणामिति वक्तव्ये दीर्घश्छान्दसः । सायणस्तु व्यंसपदं नामाविज्ञाय मन्त्रत्रयेऽपि विधयाऽन्यया व्यख्यातवान् । प्रथममन्त्रे व्यंसं विगतभूजं वृत्रमिति तस्य व्यख्यानम् । द्वितीयमन्त्रे अशुषं शुष्णं यो जघान अपि च यस्तं व्यसं अंसहीनं कृत्वा जघानेति व्याख्या । यच्छब्दद्वयश्रवणेऽपि व्यंसं पृथगसुरं ज्ञातुं तस्य स्फूर्तिर्नाभूत् । तृतीयमन्त्रे उशधक् शत्रुवधं कामयमानः यः वनेषु तत्र गूढचारिणमसुरं व्यसं विगतांसं यथा भवति तथा अहन् जघान इति व्याख्यातवान् । तत्र चतुर्थपादस्य तस्य व्याख्या नितान्तं चित्रा । राम्याणां रात्रीणां अन्तःस्थिताः धेनाः गाः आविरकृणोत् प्रकटीकृतवान् । असुराः किल देवानां द्रव्यमादाय रात्रीर्विविशुः । इन्द्रः ताभ्यो रात्रिभ्यः पुनस्तद्गोरूपं धनं जित्वा प्रकटीकृतवानिति । असुराणां देवद्रव्यमादाय रात्रिप्रवेशे तेन किमपि ब्राह्मणमुदाहृतम् । तत्र ब्राह्मणे असुराणां रात्रिप्रवेश एवोक्तः । न रात्रीणां धेनाविष्करणम् ।

अन्यत्र क्वापि रात्रिगूढधेनाविष्करणमिन्द्रकर्म नोक्तम् । तस्मादप्रसिद्ध एवार्थः । यदि रात्रौ गूढाः रश्मयः सूर्यरूपेणेन्द्ररूपेण प्रकटीक्रियन्त इत्युच्येत । तदपि न विमर्शसहम् । रश्मयः सूर्ये सन्ति ते सूर्येण सहागच्छन्ति । न रात्रौ गुढाः सूर्येण प्रकटीक्रियन्ते । वनेष्विति शब्दस्य तत्र गूढमसुरमिति व्यख्यानस्य स्वारस्यं न पृथग्वर्णनीयम् ।

सप्तदशं प्रकरणम्

## पञ्चभ्रातरः

निरूपिताः कर्णोऽर्जुनः कृष्णश्च मान्त्रवर्णिकव्यक्तयः । अर्जुनस्य भ्रातरश्च निरूपितव्याः । तत्रेयं भवति-

एतत्यत्त इन्द्र वृष्ण उक्थं वार्षागिरा अभि गृणन्ति राधः ।
ऋज्राश्वः प्रष्टिभिरम्बरीषः सहदेवो भयमानः सुराधाः ।।

ऋक्संहिता १. १००. १७

अत्रेयं सायणव्याख्या । हे इन्द्र वृष्ण कामानां वर्षितुस्ते उक्थं स्तोत्रं राधः संराधकं त्वत्प्रीतिहेतुं वार्षागिराः वृषागिरा राज्ञः पुत्राः अभिगृणन्ति आभिमुख्येन वदन्ति वार्षागिरा इत्येतद्विवृणोति । ऋज्राश्वः एतत्संज्ञो राजर्षिः प्रष्टिभिः पार्श्वस्थैरन्यैः ऋषिभिः सह इन्द्रमस्तौत् । के ते पार्श्वस्थाः । अम्बरीषादयश्चत्वारो राजर्षयः। ...ऋज्राश्वः ऋज्रागतिमन्तोऽश्वा यस्य स तथोक्तः । अम्बरीषः अविशब्दे औणादिक इषन्प्रत्ययः । सहदेवो देवैः सह वर्तत इति वोपसर्जनस्येति विकल्पनात्सभावाभावः । भयमानः भी भये अस्मादन्तर्भावितण्यर्थाद्व्यत्ययेन शानच् बहुलं छन्दसीति शपः श्लोरभावः । सुराधाः राध इति धननाम शोभनं राधो यस्य ।

वाताश्वानामृज्रत्वं बहुशः प्रयुक्तं निगमेषु । तसमादृज्राश्व इति कुत्सस्य नामान्तरम् । अम्बरीष धर्मराजः । सहदेवः सहदेव एव। भयमानो भीमः सुराधाः नकुलः । तेषु ऋज्राश्वोऽर्जुन इत्यत्र पश्यतामन्यामृचम् ।

रोहिच्छ्यावा सुमदंशुर्ललामीः द्युक्षा राये ऋज्राश्वस्य ।
वृषण्वन्तं बिभ्रती धूर्षु रथं मन्द्रा चिकेत नाहुषीषु विक्षु ।।
ऋक्संहिता १. १००. १६

रोहित् रोहितवर्णाश्या वा श्यामवर्णा सुमदंशुः सुमन्तः स्वयं प्रकाशाः अंशवो यस्याः श्वेतवर्णा तात्पर्यतः । ललामीः चित्रवर्णा ललामीशब्दस्य चिह्नपर्यायित्वात् तद्वत्वमत्रोच्यते ललामीशब्देन चिह्नानि च शरीरस्थानि तिन्त्रिणीपुष्पसदृशानि चिह्नानि । ईदृशी द्युक्षा दीप्तिभूमिः अश्वपंक्तिः कस्य ऋज्राश्वस्य अश्वानां च तुष्टवादेकैकं विशेषणमेकैकास्याश्वस्य योजनीयम् । वृषण्वन्तं इन्द्रवन्तं इन्द्रसहितमित्यर्थः रथं धूर्षु सङ्ग्रामेषु बिभ्रती कस्मै प्रयोजनाय राये धनाय शत्रुजयेन धनं प्राप्तुमित्यर्थः । नाहुषीषु नहुषवंश्यासु विक्षु प्रजासु मन्द्रा शोभमाना चिकेत ज्ञायते । ऋज्राश्वस्य रथ इन्द्रोऽपि वर्तत इति लिङ्गात्स ऋज्राश्वोऽर्जुनात् कुत्सापरपर्यायान्नापरः। स इन्द्रश्च कृष्णान्नान्यः । सा च द्युक्षाऽश्वपंक्तिर्वाताश्वाः । अत्र सायणोऽपि रथमिन्द्रवन्तमङ्गीकरोति । तथापि ऋज्राश्वार्थं स्वर्गलोकाद्रथेनायात इति कल्पयति । मनुष्यार्थं देवतानां भूलोकाय रथेन सहागमनं प्रबलं प्रसिद्धिं विना न विश्वसनीयम् । ऋज्राश्वस्यार्थे इन्द्रो रथेनागत इति न क्वाप्यस्ति नैगमिकी पौराणिकी वा प्रसिद्धिः । तस्मात्ते अश्वाः ऋज्राश्वस्यैव । ऋज्राश्वस्येति षष्ठी द्युक्षेत्यनेन शब्देन सम्बध्यते । राये इति शब्दः सम्बन्धिनिरपेक्ष एव तात्पर्यतः सम्बन्धिनं बोधयति ।

इतश्च ऋज्राश्वादयः कुत्सादयः। यदेषां सूक्तेऽन्तिमो मन्त्रः कौत्सस्य सूक्तस्यान्तिमो मन्त्रश्च द्विरावृत्त एक एव मन्त्रः । यथा-

विश्वाहेन्द्रो अधिवक्ता नो अ-
स्त्वपरिह्वृताः सनुयाम वाजम् ।

तन्नो मित्रो वरुणो मामहन्ता-
मदितिः सिन्धुः पृथिवी उत द्यौः ॥

ऋक्संहिता १. १००. १९

एते पञ्च भ्रातरो मरुतां तेजोंशावताराः । पञ्चनां प्राणानां पञ्चावतार इति बोद्धव्यम् । धर्मराज उदानस्य । कण्ठदेशस्थ उदानो भाषणक्रियायाः साहाय्यकं करोतीति वैद्यशास्त्रज्ञाः । तदुक्तमायुर्वेदसङ्ग्रहे-

प्राणेनान्नप्रवेशः स्यादुदानेन च भाषणम् ।
कर्माणि कारयेद्व्यानः समानोऽन्नस्य पाचनः ॥
अपानो गर्भविण्मूत्रशुक्रार्तवविमोचनः ॥

अमरश्च वदति-

हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः ।
उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः ॥

गुद इत्युपलक्षणमन्यस्यापि विसर्गेन्द्रियस्य। यद्धर्मराज उदानस्यावतार-स्तस्मादम्बरीष उक्तः । शब्दक्रियाचालकत्वात् ।

उदान एवोत्क्रान्तिकर्तेति वेदान्तवचनम् । तस्माद्धर्मराजो मृत्युदेवताया अंशवतारश्चेत्युक्तम् । तदिदं वेदान्तवचनं भवति ।

तेजोह वाव उदानस्तस्मादुपशान्ततेजाः पुनर्भव-
मिन्द्रियैर्मनसि सम्पद्यमानैः ॥

प्रश्नोपनिषद् ३.९

अत्रेदं भगवत्पादानां भाष्यम् ।

"यद् बाह्यं ह वाव प्रसिद्धं सामान्यं तेजः तच्छरीरे उदानः उदानं वायुमनुगृह्णाति स्वेन प्रकाशनेनेत्यभिप्रायः । यस्मात्तेजःस्वभावो बाह्यतेजोऽनुगृहीतः उत्क्रान्तिकर्ता तस्मात् । यदा लौकिकः पुरुषः

उपशान्ततेजाः भवति उपशान्तं स्वाभाविकं तेजो यस्य सः । तदा तं क्षीणायुजं मुमूर्षुं विद्यात् । सः पुनर्भवं शरीरान्तरं प्रतिपद्यते । सहेन्द्रियैर्मनसि सम्पद्यमानैः प्रविशद्भिर्वागादिभिः ।"

यदुक्तं उदानानुग्राहकं बाह्यं तेजस्तत्कालाग्निरूपम् । गूढमाकाशव्यापि तदेव यमाख्यम् । तदिदं देवतामीमांसायां विस्तृत्य प्रदर्शयामः । उदानस्य तेजःस्वभावत्वादेव तेजोमयवागिन्द्रियसाहाय्यकारित्वम् ।

उदानस्योत्क्रान्तिकर्तृत्वे तत्रैवोपनिषदीदं प्रत्यक्षं वचनम् ।

> अथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यां मनुष्यलोकम्।
>
> प्रश्नोपनिषद् ३. ७

न केवलमुत्क्रान्तिकारित्वमुदानस्य अपि तु यथा पुण्यपापं सदसल्लोकनयनं चात्रोक्तम् । एतेन तस्य धर्मराजत्वं व्याख्यातम् ।

व्यानस्य भीमः । व्यानपवसामान्यतो वायुरिति वेदान्तवचनम् । यत्तृतीय प्रश्नेऽष्टमे खण्डे वायुर्व्यान इत्याह । तस्येदं भगवत्पादानां भाष्यम् । "सामान्येन च यो बाह्यो वायुः स व्याप्तिसामान्यात् व्यानः व्यानमनुगृह्णानो वर्तत इत्यभिप्रायः।"

अत एव भीमो वायोरवतार उक्तः वैदिको भयमान शब्द ऐतिहासिको भीमशब्दश्च तुल्यार्थौ ।

प्राणस्यार्जुनः यस्य विभूतयोऽन्ये प्राणाः । यस्य वशेचान्ये प्राणाः ।

अत्रैतदुपनिषद्वचनम् ।

> यथा सम्राडेवाधिकृतान्विनियुंक्ते एतान् ग्रामानेतान् ग्रामान् अधितिष्ठस्वेति एवमेवैष प्राण इतरान् प्राणान् पृथक् पृथगेव सन्निधत्ते ।
>
> प्रश्नोपनिषद् ३. ४

अयं च श्रेष्ठः प्राण आदित्येनानुगृह्यत इति प्रश्नोपनिषदि । आपोमयः प्राणः इति च्छन्दोगाः । इन्द्र एव प्राण इति बृहदारण्यकम् । यदाह-

> अथैतस्य मनसो द्योः शरीरं ज्योतिरूपमसावादित्यस्तौ मिथुनꣳ समैतां ततः प्राणोऽजायत स इन्द्रः स एषोऽसपत्नो द्वितीयो वै सपत्नो नास्य सपत्नो भवति य एवं वेद ।
>
> अ.उ.ब्रा ५.ख.२१

कथमेतेषां सामरस्यम् । त्रिवृत्कृते प्राणे अब्बाहुल्यादापोमयः प्राण इत्युक्तिः । तत्र यत्तेजस्तद्दिव्यमिति सूर्यानुग्राह्यत्वम् । दिव्यमपि तेजः अबुपाधिकमिन्द्राख्यां भजते विद्युत्सारूप्यात् । भारतेतिहासे बृहदारण्यकोक्तमनुसृत्यार्जुनस्येन्द्रावतारत्वकथनम् । वस्तुतः स प्राणस्यावतारः । शृणु । आकाशशरीरो य आत्मा स इन्द्रः । आकाशगता इतरे भावास्तस्य विभूतयः प्राणविद्युत्कालादयः । सूक्ष्माणामपाम् अन्तरिक्षत्वादन्तरिक्षस्य चाकाशश्रयत्वात्प्राणस्याकाशस्थानत्वम् । आकाशशरीरस्यात्मनः सर्वलोकाध्यक्षस्येन्द्रस्य कृष्णोऽवतारः । अत एव विष्णोर्भिन्नमेव गोलोकपतिं कृष्णं सर्वेश्वरं कृष्णभक्ताः प्राहुः । गोलोकश्च महानाकाशः । तत्परिच्छेदान्तरे सम्यङ् निरूपयिष्यामः । प्रकृतमनुसरामः ।

समानस्य सुराधाः । यं नकुलमैतिहासिकाः प्राहुः । शोभनं राधः पूजनं यस्येति व्युत्पत्तिः । सर्वाणि ह्यन्नानि सर्वैर्देहधारिभिः समाने हि हूयन्ते । हवनात्किमपरं पूजनम् । न कोलति सङ्घीभवतीति नकुलः । कुलसंस्त्याने । प्राणापानव्यानोदानाः स्वस्वकार्येषु इतरैरिन्द्रियैः सङ्घीभवन्तो दृश्यन्ते । समानस्तु मध्ये तिष्ठन्न केनापि सङ्घीभवति तस्मान्नकुलः ।

अपानस्य सहदेवः । प्राणेन सह सर्वदा सञ्चरतीति तस्य सहदेवत्वम् । एतौ च समानापानौ सुरक्षितौ भुक्तान्नजरणेन साधुविसर्गेण च सर्वेषामारोग्यं रक्षत इति सर्वानुभवसिद्धम् । अत एतावेव स्वर्वैद्यौ । तद्युक्तं नकुलसहदेवयोर्नासत्यावतारत्वकथनम् । अन्यश्चात्रास्तिहेतुः । समानस्याकाशो देवता । अपानस्य पृथिवीति प्रश्नोपनिषद्वचनम् । "पृथिव्यां या देवता सैषा पुरुषस्यापानमवष्टभ्य । अन्तरा यदाकाशः स समानः।" इति प्रश्नोपनिषद् (३. ८)

अश्विनोर्विषये मतपञ्चकं नैरुक्ताः कथयन्ति । तत्र द्यावापृथिव्याश्विनावित्येकं मतम् । तदनुसृत्य वा समानापानयोरश्वित्वकथनम् ।

प्र शन्तमा वरुणं दीधिती गीर्मित्रं भगमदितिं नूनमश्याः ।
पृषद्योनिः पञ्चहोता शृणोतु अतूर्तपन्था असुरो मयोभुः ॥

ऋक्संहिता ५. ४२. १

इत्यस्यामृचि पञ्चहोतेत्यनेन प्राणस्य पञ्चात्मकत्वं निगमेऽपि कथितम् ।

समासं प्रसक्तानुप्रसक्तं पाण्डवानां पञ्चानां पञ्चप्राणावतारत्वम् । प्रकृतमनुसरामः। इतश्च कुत्सादयः पञ्च पाण्डवाः । यद्वार्षागिराणामेव सूक्ते तेषां श्वित्र्यत्वमुच्यते ।

दस्यूञ्छिम्यूँश्च पुरुहूत एवैर्हत्वा पृथिव्यां शर्वा नि बर्हीत् ।
सनत् क्षेत्रं सखिभिः श्वित्र्येभिः सनत्सूर्यं सनदपः सुवज्रः ।।

ऋक्संहिता १. १००. १८

पुरुहूत इन्द्रः शर्वा हिंसकान् दस्यून् दस्युजातीयान् शिम्यून् शिम्युजातीयांश्च एवैर्मरुद्भिर्द्वारा हत्वा पृथिव्यां निबर्हीत् विनाशितवान् । सखिभिः मित्रैः श्वित्र्येभिः श्वित्रपुत्रैर्द्वारा क्षेत्रं सनत् साधितवान् सूर्यं कर्णं च सनत् साधितवान् । अपः कुयवस्य जलदुर्गं च सनत् साधितवान् । सुवज्र इति पुरुहूतस्य विशेषणम् । अत्र श्वित्र्य इति शब्देन वार्षागिरा आत्मभ्रातृकूटमेव पूर्वस्यामेतत्यत्र इन्द्रेति ऋचीव परोक्षया विधया कथयन्ति । वृषागिर एव श्वित्र इति नामान्तरम् । श्वित्रशब्दस्य पाण्डुपरत्वं पूर्वत्र व्यख्यातम् । अत्र श्वित्रपुत्राणां कृष्णामित्रत्वं क्षेत्रसाधनं च पाठकैर्लक्षीकर्तव्यौ । क्षेत्रनिमित्तं हि महाभारतयुद्धम् ।

ननु श्वित्र्या वार्षागिरेभ्यो भवन्तु भिन्नाः । न । सूर्यसाधनसादृश्या-ल्लिङ्गाद्वार्षागिरा एव श्वित्र्या । श्वित्रवृषागीःशब्दौ तुल्यार्थाविति यावत् । कुत्र सूर्यसाधनसादृश्यलिङ्गं वार्षागिराणां श्वित्र्याणां चेति चेत् । पश्यतैतामृचम् ।

स मन्युमीः समदनस्य कर्ताऽस्माकेभिर्नृभिः सूर्यं सनत् ।
अस्मिन्नहन्त्सत्पतिः पुरुहूतो मरुत्वान्नो भवत्विन्द्र ऊती ।।

ऋक्संहिता १. १००. ६ वार्षागिराः

मन्युमीः शत्रुक्रोधभञ्जकः । समदनस्य युद्धस्य । कर्ता । सत्पतिः सतां प्रभुः । पुरुहूतः इन्द्रः । अस्मिन् । अहन् अहनि । अस्माकेभिः अस्मदीयैः । नृभिः योधैः । अस्माकेभिरस्माभिः नृभिरिति वा । अयमेवार्थो ज्यायान् । सूर्यं कर्णम् । सनत् साधयतु । मरुत्वान् इन्द्रः नः अस्माकं

ऊती रक्षणेन रक्षणायेति चतुर्थ्यर्थे तृतीयौ । भवतु । दस्यूनिति मन्त्रे श्वित्र्येभिः सूर्यं सनदिति भूतार्थकथनम् । अत्रास्माकेभिर्नृभिः सूर्यं सनदिति प्रार्थना । तस्माच्छित्र्या वार्षागिरा एव भवन्ति ।

इमं मन्त्रं वार्षागिराणां युद्धजयप्रार्थनारूपमङ्गीकुर्वन्नपि सायणः सूर्यं सनदित्यस्यैवमर्थं कृतवान् ।"अस्माकेभिः नृभिः पुरुषैः सूर्यं सूर्यप्रकाशं सनत् सम्भक्तं करोतु ।शत्रुपुरुषैस्तु दृष्टिनिरोधकमन्धकारं संयोजयतु।" सूर्यस्य वार्षागिरं प्रतिस्पर्धित्वमजानतोऽयं द्राविडप्राणायामः ।

ननु वार्षागिरयुद्धप्रकरणे एवानां (मरुतां) कः सम्बन्धः । उच्यते । यथा कृष्णेन्द्रयोरंशांशिनोरभेदेन निगमेषु व्यवहारः । एवं पाण्डवानां मरुतां च । एवं पदं योगतो वा पाण्डवपरम् ।

मन्त्रद्वयेऽपि सूर्यसाधनप्रस्तावादृज्राश्वः कुत्स इति भूयो दृढीकृतम् ।

अथ काचित्पदार्चचर्चा । सनतिः सम्भक्त्यर्थे पठितोऽपि निगमेषु साधनार्थे प्रयुज्यते ।सम्भक्तिः सा धनपर्यायः स्यात्तात्पर्यतः ।प्राप्तिस्तस्य मुख्यार्थः । को विशेषः साधनप्राप्त्योः । अनुकूले कर्मणि उभयमप्येकार्थकम् । तोकस्य सनितावित्युदाहरणम् । प्रतिकूले प्राप्तेरन्वपायफलपर्यन्तमनुधावनं कर्तव्यम् । यथा सूर्यं सनत् । सूर्यजयप्राप्यस्य फलस्य प्राप्तिर्वक्तव्या । तत् क्लिष्टम् । तस्मात्तत्र साधयत्वित्येवार्थः कर्तव्यः । "सनिता विप्रो अर्वद्भिः" इत्यादौ साधनार्थे अश्वैः साधयिता शत्रूनिति लाघवेनार्थः । अश्वैर्धनं प्रापयितेति बह्वध्याहारकरणात् ।

सनतिः साधनार्थक एव निगमेष्वित्यस्य स्पष्टमेतदुदाहरणं भवति ।

स व्राधतः शवसानेभिरस्य कुत्साय शुष्णं कृपणे परादात् ।
अयं कविमनयच्छस्यमानमत्कं यो अस्य सनितोत नृणाम् ।।
ऋक्संहिता १०. ९९. ९

स प्रसिद्धस्त्वं शवसानेभि र्बलवद्भिरात्ममित्रैः अस्य असितवानसि धूतवानसि शत्रून् । अथ परोक्षकृतः । स इन्द्र कृपणे युद्धे कुत्सार्जुनाय शुष्णं कर्णं । परादात् परादत्तवान् । अर्जुनेन शुष्णं घातितवानित्यर्थः । "माऽवीरतायै परादाः" इत्यादयो निगमप्रयोगा द्रष्टव्याः परादा इत्यस्य पदस्यार्थविषये । एतेनार्जुन एव कर्णस्य हन्ता कृष्णस्तु प्रेरक एवेति दृढीकृतम् । अयमिन्द्रः शस्यमानं स्तुत्यं कविं कुत्साग्रजं "रपत्कविरिन्द्रार्कसातौ" (ऋक्संहिता १. १७४. ७) "दशोणये कवयेऽर्कसातौ" (ऋक्संहिता ६. २०. ४) "कविर्यदहन्पार्याय भूषात्" (ऋक्संहिता ४. १६. ११) इत्यादयः प्रयोगाः स्मर्तव्याः । प्रकरणान्तरे तान् स्पष्टीकरिष्यामः । अनयत् नीतवान् । य इन्द्रः अस्य कवेः कवये चतुर्थ्यर्थे षष्ठी । अत्कं अत्कनामकं शत्रुं सनिता साधयिता । उत अपि च । नृणां नेतॄणां शत्रुवीराणां च सनिता साधयिता । अत्र लब्धेत्यर्थो न सङ्गच्छते । सायणस्तु अत्रापि क्लिष्टया व्याख्यया स्वकीयं प्राप्त्यर्थमेवं पोषितवान् । अयमिन्द्रः शस्यमानं कविमुशनसं अनयत् स्ववशं अनयत् । यः कविः अस्येन्द्रस्य अत्कं रूपं सनिता प्राप्ता । उत नृणां इन्द्रानुचराणां मरुतां च प्राप्ता । इति तस्य व्यख्यासारांशः । अत्रास्यात्कशब्दो रूपपर्यायोऽभूत् । तथापि अत्यन्तमप्रसिद्धमर्थं कल्पयति। उशाना किलेन्द्रस्य रूपं लब्धवान् । मरुतश्च लब्धवान् । अनन्तरं इन्द्रः किल तं स्ववशमनयत् । स्ववशमित्यध्याहारो निराकाङ्क्षः व्यख्यातुर्व्याख्यानपूर्तये उपयुक्तः ।

ईदृश एव सन्दर्भे सोऽन्यत्र निगमे कथं व्यख्यातवन् पश्यत ।

अहमत्कं कवये शिश्नथं हथैरहं कुत्समावमाभिरूतिभिः ।
अहं शुष्णस्य श्नथिता वधर्यमं न यो रर आर्यं नाम दस्यवे ।।

ऋक्संहिता १०. ४९. ३

वैकुण्ठस्य भगवत इदं वाक्यम् । अत्रेयं सायणव्यख्या । "अहमिन्द्रोऽत्कमाच्छादकं शत्रुपुत्रं कवये उशनसे ऋषये हथैः .... प्रहारै....शिश्नथं ताडितवानस्मि।....किंचाहं कुत्समेतन्नामकमृषिं आभिरूतिभि ....आवमरक्षम् ।....अहं कुत्सार्थं शुष्णं श्नथिता हिंसिता तस्य हननायेत्यर्थः । वधः वज्रं यमं नियमितवानस्मि । योऽहं आर्यं आधसम्बन्धि आर्याणां देयमित्यर्थः । नाम उदकनामैतत् नामक उदकं दस्यवे शत्रवे ....न ररे न दत्तवानस्मि। यद्वा आर्यं पूज्यमित्यसाधारणं नाम दस्यवे न दत्तवानस्मि।"

अत्र पूर्वः पादोऽस्माकं प्रकृतः । "अहमत्कं कवये शिश्नथं हथैः ।" इत्यत्रोकृ एव विषयो वम्रेण ऋषिणा अयं कविमनयच्छस्यमानमत्कं यो अस्य सनितेत्यनेन वाक्येनोक्तः । तस्मादयमेवार्थस्तत्र वक्तव्यः । सनतेः साधनार्थकत्वमन्यत्र चात्र निगमे पश्यत ।

भूरि चक्र मरुतः पित्र्याणि उक्थानि यावः शस्यन्ते पुरा चित् ।
मरुद्भिरुग्रः पृतनासु साह्ळा मरुद्भिरित्सनिता वाजमर्वा ।।

ऋक्संहिता ७. ५६. २३

अत्र चतुर्थः पादोऽस्माकं प्रकृतः। अर्वा अश्वः । मरुद्भिरित् मरुद्भिरेव वाजं युद्धं सनिता साधयिता भवति । अत्र सायणस्तु प्रथममेवं व्यख्यातवान् । "मरुद्भिरित् मरुद्भिर्युष्माभिरेव अर्वास्तोत्रैरभिगन्ता वाजमन्नं सनिता सम्भक्ता भवति।" अनन्तरं अर्वच्छब्दस्याप्रसिद्धार्थे वृत्तिं विरसां मत्वेव यद्वेति व्यख्यानान्तरं कृतवान् । "अर्वा अश्वः

वाजं युद्धं सनिता भवति" अत्र सनितेत्यस्य प्रतिपददाने मौनम् अवलम्बितवान्। सम्भक्ता भवतीत्यस्य तदाशयप्रकारेण लब्धाभवतीति यद्यर्थः क्रियेत तदा तस्य स्वारस्यमपारस्यात् ।

सनित्या सातिर्व्याख्याता । सूर्यस्य सातौ अर्कसातौ इत्यादौ सूर्यस्य साधने अर्कस्य साधने इत्याद्येवार्थः ।

सातेः साधनार्थे प्रयोगे निःसंशयामेकामुदाहरिष्यामः।

यस्यानूना गभीरा मदा उरवस्तरुत्राः ।
हर्षुमन्तः शूरसातौ ।

ऋक्संहिता ८. १६. ४

शूरसातौ शूराणां विरिधिनां सातौ साधनेन लब्धौ । सायणस्तु तत्र भावार्थकं सातिशब्दमन्यथा कृत्वा शूरसातौ शुरैः सम्भजनीये सङ्ग्रामे इत्यर्थं कृतवान् । सातिशब्दो भावार्थक एव सर्वत्र प्रयुज्यत इति तद्व्याख्यानमुपेक्ष्यम् । सिद्धं वार्षागिराः पञ्चैव पञ्चपाण्डवा इति । तेषां ज्येष्ठानुज्येष्ठत्वं यथेतिहासम् ।

"मघोनो ह्रदो वरथस्तमांसि" इत्यनेन इन्द्रकुत्सयोर्यजमानोन्योऽस्तीति सूचनान्न कुत्सो ज्येष्ठः ।"पश्येम तुर्वशं यदुम्।" "सजोषसोयमर्यमामित्रो नयन्ति वरुणो अतिद्विषः" इत्यादौ ज्येष्ठानुज्येष्ठतामनुसृत्यैव क्रमेण प्रयोगनियमो नेति ज्ञातवन्तो वयम् ।

अष्टादशं प्रकरणम्

नरः पाण्डवाः

## कर्णस्य प्रतापः

न केवलं कुत्सः अन्ये च तस्य भातरः कृष्णेन रक्षिताः । अत्रेयं भवति ।

त्वं सूरो हरितो रामयो नॄन् भरच्चक्रमेतशो नायमिन्द्र ।
प्रास्य पारं नवतिं नाव्यानामपि कर्तमवर्तयोऽयज्यून् ।।

ऋक्संहिता १. १२१. १३

हे इन्द्र त्वं नॄन् पाण्डवान् अभिलक्ष्यागच्छतीः सूरः सूर्यस्य हरितः अश्वान् रामयः निवारितवानसि । चक्रं सूर्यचक्रं भरत् अपहृतवान् । अयं एतशेन एतशश्च नेति निपातोऽत्र समुच्चयार्थः इन्द्रो न·वज्री हिरण्यबाहुरित्यादाविव। एतशेन सहेति तात्पर्यार्थः । नव्यानां नदीनां नवतिं नवतिसम्बन्धिनं षष्ठ्यर्थे द्वितीया पारं तीरं प्रास्य गतवानसीति लक्ष्योऽर्थः । अपि किंच अयज्यून् प्रतिकर्तं कृन्तनं वज्रं अवर्तयः व्यापारितवानसि । पुनः पुनरभ्यस्तामेतशार्थं सूर्यरथचक्रहरणकथां विस्मृत्य प्रकरणमन्यत्कृत्वा सायणो यदत्र व्याख्यातवान् । तच्चिन्त्यम् । पूर्वार्धे तस्यायं व्याख्यासारांशः । त्वं सूरः सूर्यात्मकस्त्वं नॄन् नेतॄन् हरितः अश्वान् रश्मीन्वा रामयः उपरमयः एतशेन सूर्याश्वचक्रं रथचक्रं भरत् प्रावहत् । उत्तरार्धव्याख्या अस्मदुक्तदिशैव प्रायः । अश्वोपरमणस्य अश्वचक्रवहनस्य च विरुद्धार्थयोः कथं सम्बन्धः । पूर्वोत्तरार्धर्चवाक्यसम्बन्धस्तु तीर्थस्य तीर्थः प्रसादस्य प्रसाद एव ।

नरः पाण्डवाः कथम् । मरुदवतारत्वादिति ब्रूमः । अन्यत्र च पश्यत पाण्डवपर्यायत्वेन नृशब्दप्रयोगम् ।

सो अप्रतीनि मनवे पुरुणि इन्द्रो दाशद्दाशुषे हन्ति वृत्रम् ।
सद्यो यो नृभ्यो अतसाय्योऽभूत्पस्पृधानेभ्यः सूर्यस्य सातौ ॥

ऋक्संहिता २. १९. ४

अतसाय्यः समाश्रयणीयः। सूर्यस्य सातौ पस्पृधानेभ्य इति लिङ्गान्नरोऽत्र पाण्डावाः । सूर्यः कर्णः ।

अस्यामनन्तरामृचं पश्यत । एतदेव प्रकरणमधिकृत्य ऋषिर्वदति ।

स सुन्वत इन्द्रः सूर्यमा देवो रिणङ्मर्त्याय स्तवान् ।
आ यद्रयिं गुहदवद्यमस्मै भरदंशं नैतशो दर्शस्यन् ॥

ऋक्संहिता २. १९. ५

स्तवान् स्तूयमानः देवः स इन्द्रः सुन्वते मर्त्याय एतशाय सूर्यं आरिणक् धूतवान् । यत् यस्मात् कारणात् दशस्यन् दातुमिच्छन् एतशः गुहदवद्यं प्रच्छन्नं वक्तुमशक्यं च रयिं धनं मनोरूपमिति तात्पर्यम् । अस्मै इन्द्राय अंशं न भागमिव आभरत् ।

अत्रेयं सायणव्याख्या ।"स्तवान् एतशेन स्तूयमानः देवो द्योतमानः स इन्द्रः सुन्वतो सोमाभिषवं कुर्वते एतशाय सूर्यमारिणक् एतशेन स्पर्धमानं सूर्यं बलेनारोचयत् । तथा च निगमः "प्रैतशं सूर्ये पस्पृधानं सौवश्व्ये सुष्विमावदिन्द्रः" इति । यद्यस्मात् एतशः सौवश्व्यो राजा दशस्यन्यजमानः अस्मै इन्द्राय गुहदवद्यं प्रच्छन्नावद्यं रयिं सोमरूपम् आभरत् सम्पादयामास । तत्र दृष्टान्तः अंशं न यथा पिता अंशं भागं पुत्राय भरति तद्वत् ।"

एतदक्षन्तव्यं दुष्टं व्याख्यानम् । सूर्येण स्पर्धमानमेतशं सूर्याद्ररक्षेति स च सूर्यः सौवश्व्य इति च प्रैतशमित्यर्धर्चस्य व्याख्याने अयं चक्रमिषणत् इत्यर्धर्चस्य च व्याख्याने अयमेव पण्डितोऽङ्गीकृतवान् । पूर्वमन्त्रव्याख्याने च यद्वेत्यारभ्य "सूर्यस्य सातौ पोन्तकर्मणि अधिकरणे क्तिन् सूर्यस्य सम्बन्धिनि युद्धे पस्पृधानेभ्यः सूर्येण सह स्वर्धमानेभ्यः अतसाय्योऽभूत् सततं गमनीयोऽभूत् ।" इति कथितवान् । एतत्सर्वं च विस्मृत्य प्रकरणं च भञ्जन् अत्र एतशस्पर्धिनं सूर्यं बलेनारोचयदिति व्याचष्टे । आरिणगित्यस्य बलेनारोचयदित्यर्थः कथं स्यात् । पाठकानां नयनयोर्धूलिप्रक्षेपणमेतत् । तदा एतशायेति चतुर्थ्याः कोऽर्थः । एतशं हन्तुमिति स्यात् तच्छत्रोर्बलेन रोचनं तद्धननायैव ह्युपयुज्येत । यच्छब्दवाक्ये इतोऽप्यसंदर्भं व्यख्यातवान् । एतशः किल सौवश्व्यो राजा । वस्तुतः सौवश्व्यः एतशविरोधी । आत्मनोदाहृतं निगमान्तरं तत्रस्थमात्मनो व्यख्यानं च स्वप्रतिकूले । ईदृशं परस्परविरुद्धं सत्यार्थध्वंसकं यथाकथञ्चित्पारं प्राप्तं व्यख्यानं यदि विद्वांसः समाद्रियन्ते तेषां सत्यं वेदार्थं ज्ञातुं श्रद्धैव नास्तीति वक्तव्यम् । कस्यचिद्वर्गस्यैवेदं व्याख्यानं नैकस्य वेदार्थशोधकस्येति भूयो दृढीकृतम् ।

किं पर्यवसन्नम् । नरः पाण्डवाः । एतेन नरनारायणौ व्याख्यातौ । नृशब्दवन्नरशब्दः पञ्चपाण्डवसाधारणोऽपि प्राधान्यादर्जुनं तत्र वक्ति । नरो नामाङ्गिरसः कश्चिदृषिरन्यो विद्यते । स कुत्सादन्य एव । नारायण ऋषिश्च विद्यतेऽन्यः। सोऽपि कृष्णादन्य एव । यौ पुरातनौ देवर्षी नरनारायणौ तौ प्राणमहेन्द्रावेव भवतः ।

ननु यथा कर्णस्तथाऽर्जुनोऽपि देवांशः । एवं स्थिते मर्त्याय सूर्यमरिणाः

मर्त्याय सूर्यमारिणगिति प्रयोगयोः कथमुपपत्तिरिति चेत् । मर्त्यांशबाहुल्यादर्जुनो मर्त्यः कथितः । दिव्यांशबहुल्यात्कर्णः सूर्यः कथित इति बोध्यम् । अर्जुनात्कर्ण एव महानवतारः प्रसज्येतेति चेत् । तदिष्टम् । तेन जिताः पञ्चापि पाण्डवाः । अन्ततोऽर्जुनः कृष्णस्य दिव्यबलसाहाय्यकादेव ते जितवान् । अपि च सप्रधानदेवताया अवतारः । पाण्डवास्तु गणदेवतानाम् । तस्मिन्काले वैकुण्ठादनन्तरो महानवतारः कर्ण एव भवति ।

एकोनविंशं प्रकरणम्

# कविः तस्यान्यानि च नामानि

कविः कुसाग्रज इति पूर्वत्रोक्तम् । अस्मिन्प्रकरणे तमधिकृत्य किञ्चिदुच्यते । "मघोनो हृदो वरथस्तमांसी"(ऋक्संहिता ५. ३१. ९) त्यत्र यो यजमान उक्तः स एव कविर्यदहन्पार्यायभूषादित्यत्रोक्तः । स च युधिष्ठिरान्नान्यः । किमत्र लिङ्गम् उच्यते । "अहमत्कं कवये शिश्नथं हथैः" (ऋक्संहिता १०. ४९. ३) इति वैकुण्ठस्योक्तिः । "अयं कविमनयच्छस्यमानमत्कं यो अस्य सनितोत नृणाम् ।" (ऋक्संहिता १० ९९. ९) इति वम्रस्यार्षं वचनम् । तेनात्कस्य शत्रुः कविरेष इति ज्ञातमस्माभिः । अत्कश्च शल्यः । अत्कशल्यशब्दयोः पर्यायपदत्वत् । नाम्ना अत्कं सन्तं जयेतिहासकारो रमणीयेन पर्यायपदेन शल्य इति कथितवान् । बाणस्याग्रभागः शल्यनामकः । अत्कनामकश्च प्राचां भाषायाम् । रक्तसेचकात्कत्वादेव पृषत्को बाण उच्यते । अतत्यन्तरी-त्यत्कः । अत सातत्यगमने । सातत्यगमनं च मध्ये अविच्छिन्नं गमनम् । धारावाहितयागमनमिति यावत् । सदा भ्रमणमिति न सातत्यगमनपदार्थः । तस्मिन्पक्षे अश्वपर्यायस्यात्यशब्दस्य व्युत्पत्तिरनन्विता भवेत् । बाणाग्र-भागश्च धारावाहितया गच्छत्यन्तरिति सकलानुभवसिद्धो विषयः । शल्यशब्दव्युत्पत्तौ नामलिङ्गानुशासनव्याख्याकारो लिङ्गयसूरिरेवं वदति । शलत्यन्तरिति शल्यम् । शल आशुगमने । सामान्यतोगत्यर्थकोऽपि शलतिराशुगमनार्थक एव प्राचीनैर्गृह्यते । आशुगमनं च बाणादीनामग्रस्य धारावाहित्वेन गमनम् । तस्मादत्कशल्यशब्दौ तुल्यार्थौ ।

इतश्च कविर्युधिष्ठिर एव नोशनाऽन्यो वा ।

शतैरपद्रन्पणय इन्द्रात्र दशोणये कवयेऽर्कसातौ ।
वधैः शुष्णस्याशुषस्य मायाः पित्वो नारिरेचीत् किञ्चन प्र ॥
ऋक्संहिता ६. २०. ४

हे इन्द्र। दशोणये दशसु ओणिषु दिक्षु विख्यातो दशोणिस्तस्मै । कवये । तदर्थमिति यावत् । कृतायामिति शेषः । अत्रास्याम् । अर्कसातौ सूर्यसाधने । कर्णसाधन इति यावत् । पणयः असुराः । शतै वहुशतसङ्ख्याकैर्योधैः सह । अपद्रन् पलायिताः । अथ परोक्षकृतः स्तवः । (अयमिन्द्रः) वधैर्वज्रशक्तिभिः । वधशब्दो वज्रपर्यायोऽत्र गृह्यते । अशुषस्य घृणिनः शोषयितुमशक्यस्य वा । शुष्णस्य सूर्यावतारस्य कर्णस्य मायाः । किञ्चन किञ्चिदपि । न प्रारिरेचीत् नातिरिक्तानकरोत् । अपि च पित्वः अन्नानि च नप्रारिरेचीत् ।

अत्र कविरर्जुनो युधिश्चिरो वा स्यात् । तदर्थमेव सूर्यसाधनस्योक्तत्वात् । "अहमत्कं" (ऋक्संहिता १०. ४९. ३) "स व्राधतः" (ऋक्संहिता १० ९९. ९) इति मन्त्रयोः कवेः कुत्सात्पृथङ्निर्देशेन कविः कुत्सादन्य एव भवति । परिशेषात्कविर्युधिष्ठिरः । एतेन कविर्यदन्पार्यायभूषादिति मन्त्रपादे कविश्च न कुत्स इति चेत् ।

सायणाचार्यस्तु उभयत्रापि कविं कुत्समेव मन्यते । अनयोर्द्वयोः कविशब्दः कुत्सपरोऽपि न प्रकरणविरुद्धः । मन्त्रान्तरोक्तार्थसामरस्याय कविः कुत्साग्रजो वक्तव्य इत्यस्माकं मतम् । दशोणये इत्यत्र सायणेन बहुहविष्क इत्यर्थः कृतः । प्रायः सप्तम्यन्तं पदमिव तस्य प्रतिपदपर्यालोचने दृश्यते ओणयशब्दो हविर्वाची न क्वापि निगमेषु लभ्यते । तस्य मतेन अर्कसातिर्युद्धम् । अर्कोऽन्नं प्राप्यतेऽस्मिन्निति

व्युत्पत्तितः । तस्य बहु हविष्क इति विशेषणं न सङ्गच्छते प्रायो मुद्रणदोषः स्यात् । दशोणिशब्द एव बहुहविष्कार्थकस्तेन कृतः स्यात् । तच्चकवेर्विशेषम् । अत्रपक्षे ओणिशब्दो हविर्वाचकः । ओणिशब्दस्य हविर्वाचकत्वे न क्वाप्यस्ति प्रयोगः । न वास्ति निघण्टुः । ओणिशब्दो निघण्टौ द्यावापृथिवीपरः द्विवचनान्तः पठितः । तस्मिन्नर्थे नैगमः प्रयोग एष भवति ।

तं त्वा धर्तारमोण्योः पवमान स्वर्दृशम् ।
हिन्वे वाजेषु वाजिनम् ।।

ऋक्संहिता ९. ६५. ११

अत्र "ओण्योः द्यावापृथिवीनामैतम् तयोर्धर्तारं धारकम् ।" इति सायणीयव्याख्या । द्वे ओण्यौ द्यावापृथिव्यौ चेत् । दश ओण्यः दश दिश एव भवन्ति । यासु द्यौरूर्ध्वा दिक् पृथिवी ध्रुवा दिक् । अन्या अष्टौ दिशश्च दिव्ये वान्तर्भवन्ति सूक्ष्मं यदि पश्यामः । ओणिशब्दस्यैव छन्दसि ओण्याविति द्विचनम् । दशोणिरित्यत्र पररूपमपि छान्दसम् । ननु दशोणिः कविः कुत्स एव भवतु । नात्र कविशब्दं प्रसिद्धं किमपि नाम । अपितु क्रान्तदर्शिपरं योगतः । एवं कविर्यदहन्यार्याय-भूषादित्यत्रापि। तस्मादनयोः कविशब्दस्य कुत्सपरत्वं न मन्त्रान्तरस्थ-कविकुत्सभेदप्रतिबन्धकमिति चेत् । न । कविशब्दस्यार्कसाति-प्रकरणस्थस्य केवलयौगिकत्वेनान्वये मन्त्रान्तरस्य कोपः स्यात् ।

रपत्कविरिन्द्रार्कसातौ क्षां दासायोपबर्हणीं कः ।

ऋक्संहिता १. १७४. ७ अगस्त्यः

हे इन्द्रः । अर्कसातौ सूर्यसाधने । कविः कविनामा । रपत् अस्तौत् । दासाय शत्रूणामुपक्षयित्रे शुष्णाय । क्षां पृथिवीम् । उपबर्हणीं उपधानं । कः अकरोः । तं भूपतितमकार्षीरित्यर्थः ।

अत्र कविशब्दो नामवाचकः । न विशेषणं कस्यचिन्नाम्नः । तस्मात् कविरिति कुत्सस्य नामान्तरं वक्तव्यम् । कुत्साग्रजस्य वा । पूर्वं मन्त्रान्तरस्थभेदविरोधि । उत्तरमेव साधु ।

इतश्च दशोणिः कविः कुत्साग्रज एव न कुत्सः ।

आवः कुत्समिन्द्र यस्मिञ्चाकन्प्रावो युध्यन्तं वृषभं दशद्युम् ।
शफच्युतो रेणुर्नक्षत द्यामुच्छ्वैत्रेयो नृषाह्याय तस्थौ ।।

ऋक्संहिता १. ३३. १४ हिरण्यस्तूपः

हे इन्द्र । यस्मिन् कुत्से । चाकन् कामयमानो भवसि । तम् । आवः अरक्षः । युध्यन्तम् । वृषभं श्रेष्ठम् । दशद्युम् दशद्युनामकं च प्रावः । युद्धप्रसङ्गाद्दशद्योर्दण्डयात्रां वर्णयति । शफच्युतः अश्वस्य बहुषु व्यत्ययेनैकवचनम् । अश्वानामित्यर्थः । रेणुः खुरोत्थितो धूलिः । द्यामाकाशम् । नक्षत प्राप्नोत् । श्वैत्रेयः श्वित्रस्य पुत्रो दशद्युः । नृषाह्याय नेतॄणां वीराणां सहनाय तान् जेतुमित्यर्थः । उत्तस्थौ उत्थितः । उत्थानं चात्र स्थैर्येणावस्थानम् ।

अत्र दशद्युः श्वित्रस्य पुत्रः । स च कुत्सादन्यः आव प्राव इति क्रियापदाभ्यां तयोः कर्मभूतयोः प्रत्येकं योगात् । स च दशद्युः दण्डयात्राया नायकः । तस्माद्युधिष्ठिर एव दशद्युर्वक्तव्यः । दशद्युशब्दश्च दशोणिशब्दतुल्यार्थकः । तस्माद्दशोणिकविर्युधिष्ठिर एव भवति । श्वित्रस्य (पाण्डोः) पुत्रोऽयं दशद्युरुक्त इति विषयो वाचकैर्लक्षीकर्तव्यः । श्वित्रपुत्रेषु कुत्सादन्यो दण्डयात्रानायको युधिष्ठिर एव स्यादित्यत्र नैवस्मात्कस्यापि संशयः । राजा वा स्याद्दण्डयात्रानायकः । सेनानां नियामको विशिष्टो वीरो वा । अन्यदत्र रहस्यं विज्ञायते । किं तत् । यदम्बरीषस्य युधिष्ठिर इति जयेतिहासो नामकृतम् । तस्य "उच्छ्वैत्रेयो नृषाह्याय तस्थौ" (ऋक्संहिता

१. ३३. १४ ) इति मान्त्रवर्णिकलिङ्गमेवाधारः ।

सायणस्तु स्त्रीभ्यो ढगिति सामान्यसूत्रमवलम्ब्य श्वित्रायाः पुत्रः श्वैत्रेय इति व्युत्पत्तिं करोति । शुभ्रादिगणस्याकृतिगणत्वात्तत्र श्वित्र शब्दस्यान्तर्भावे ढगेषः । पाण्डुशब्दोऽपि शुभ्रादिषु योजनीयो विकल्पेन । पाण्डवेयशब्दो बहुशः प्रयुक्तो महाभारते । छन्दसि प्रायो विधीनां वैकल्पिकत्वदर्शनाच्छ्वित्रपुत्राः श्वेत्रेयाः श्वित्र्याश्च । दशद्युः श्वैत्रेय उत्तरस्यामृचि श्वित्र्यः कथितः ।

आवःशमं वृषभं तुग्र्यासु क्षेत्रजेषे मघवञ्छित्र्यं गाम् ।
ज्योक्चिदत्र तस्थिवांसो अक्रञ्छत्रूयतामधरा वेदनाकः ।।
ऋक्संहिता १. ३३. १५ हिरण्यस्तूपः

हे मघवन् इन्द्र । तुग्र्यासु तोयं गृह्णतीति तोयग्रः तोयग्र एव तुग्रः मेघः तद्भावासु तुग्र्यासु अप्सु निमित्तभूतासु । किञ्च क्षेत्रजेषे क्षेत्रजये निमित्ते । गां गच्छन्तम् । वृषभं श्रेष्ठम् । शमं शाम्यतीति शमस्तं शान्तिगुणप्रधानम् । श्वित्र्यं श्वित्रपुत्रं पूर्वोक्तं दशद्युम् । आवः अरक्षः । अत्र अस्मिन्युद्धे । ज्योक् चित् चिरम् । तस्थिवांसः (ये) अक्रन् कृतवन्तः कर्म । तेषां शत्रूयताम् । अधरा अधराणि । वेदना वेदनानि । अकः अकरोः ।

युधिष्ठिरस्य धर्मराजाभिधानस्याधारस्तस्य वैदिकं वृषभनाम लिङ्गम् । धर्मो वृषात्मको हि वाङ्मये वर्ण्यते । शतनाम च तत्र साहाय्यकम् आचरति ।

अत्र जलं भूमिसाधनं च रक्षणकर्मणि निमित्तत्वेनोक्ते दस्यूञ्छिम्यूं श्चेति मन्त्रे श्वित्र्येभिः सखिभिः सनत्क्षेत्रम् सनदपः इति यदुक्तं

तद्वाचकैः स्मर्तव्यम् । अत्र श्वित्र्यः तत्र श्वित्र्या इति भेदः । सायणस्त्वेकत्र श्वित्र्यं श्वित्रापुत्रमुक्त्वाऽन्यत्र श्वित्र्यान् श्वेतवर्णान् मरुतो वक्ति । एक एवं यदि व्याख्याता नेदृशानि विमर्शासहानि स्खलितानि भवेयुः ।

अम्बरीषः कविः दशोणिः दशद्युः वृषभः शम इति षण्णामायुधिष्ठिरो निगमेष्विति सिद्धम् । युधिष्ठिर धर्मराजाभिधानयोर्मूललिङ्गे च ज्ञाते ।

विंशं प्रकरणम्

## भयमानः

जयेतिहासे यो भीमः स निगमे भयमान उक्त इत्यस्माभिर्ज्ञातम् । तस्य बाहुबले तदिदं मन्त्रलिङ्गं भवति ।

यूयं राजानमिर्यं जनाय विभ्वतष्टं जनयथा यजत्राः ।
युष्मदेति मुष्टिहा बाहुजूतो युष्मत्सदश्वो मरुतः सुवीरः ।।

ऋक्संहिता ५. ५८. ४

यजत्राः हे मरुतः जनाय भजमानाय पुरुषाय यूयं राजानं दीप्तिमन्तं इर्यं शत्रूणां च्यावयितारं विभ्वतष्टं विभ्वनामकेन ऋभुणा मध्यमेन निर्मितं पुत्रं जनयथ । स च युष्मत् भवद्भ्यः कारणात् भवत्प्रसादादित्यर्थः । बाहुजूतः बाहुप्रेरितः मुष्टिहा मुष्टिभिरेव शत्रून् घ्नन् एति युष्मदेव सदश्वः सद्वाहनः सुवीरः महावीरः सः एति गच्छति ।

ऋभुर्विभ्वो वाजश्चेति ऋभवस्त्रयः । तेषामन्यतमेन निर्मितमित्युक्तिः पुत्रोत्पत्तेर्दिव्यत्वसूचनाय । गर्भाधानमंत्रे त्वष्टा रूपाणि पिंशतु इत्युक्तस्त्वष्टा ऋभुरेव । त्रयोऽमी देवशिल्पिन इति प्रसिद्धिः । मरुतां जनयितृत्वमनुग्रहवशात् । भीमस्य च वायोरुत्पत्तिरितिहासे कथ्यते । मारुतं शर्ध एव वायुः ।

अयमेव मारुतो द्युतानः स्यात् । यस्याङ्गिरसस्तिरश्चीरिति नामान्तरम् । अस्मा उषास इति सूक्तस्य आङ्गिरसस्तिरश्चीर्मारुतो द्युतानो वेति

विकल्पकथनं नाम विकल्प एव भवति न व्यक्तिविकल्पः । अयमेव द्युमानः कृष्णद्रप्सयुद्धे इष्यामिवो वृषणो युध्यताजौ इति मरुतः प्रार्थितवान् । तदाऽयं तस्य युद्धस्य प्रत्यक्षदर्शी ।

कुत्सस्याङ्गिरसत्वेन द्युतानस्याङ्गिरसत्वं व्याख्यातम् । तिरश्चीर्नाम तिर्यग्दर्शनः ।

भीमस्य तिर्यग्दर्शनत्वे सोऽयं भारतश्लोको भवति ।

अमर्षणश्च कौन्तोयो दृढवैरश्च पाण्डवः ।
अनर्महासी सोन्मादस्तिर्यक्प्रेक्षी महास्वनः ।।

महाभारतम् उद्योगपर्व ५१. ५

धृतराष्ट्रकृतभीमप्रस्ताव एष श्लोकः ।

शाट्यायनकब्राह्मणे काचित्कथाऽस्ति । "इन्द्रो वा असुरान् हत्वाऽपूत इवामेध्योऽमन्यत । सोऽकामयत । युद्धमेवमासन्तं शुद्धेन साम्ना मां स्तुयरिति । स ऋषीनब्रवीत् । स्तुतमेति । तत ऋषयः सामापश्यन् । तेनास्तुवन्नेतोन्विन्द्रमिति। ततो वा इन्द्रः पूतः शुद्धो मेध्योऽभवदिति ।" ऋषय इति बहुवचनमादरार्थम् । तस्य साम्न एकस्यैव तिरश्च्या ऋषित्वात् । को भावः कथायाः । वैकुण्ठो बन्धोः कंसस्य वधादात्मानं पापिनममन्यत । भीमः शुद्धेन साम्नाऽऽत्मदृष्टेन तं संस्कृत्य विपापमकरोत् । तेन शुद्धो भूत्वा बलवानभूत् । एतच्च सामतृचं भवति । तस्योपसंहारे "शुद्धो वृत्राणि जिघ्नरो शुद्धो वाजं सिषाससि" इत्युक्तम् । तेनानुमातुं शक्यं "बृहस्पतिनायुजेन्द्रः समाहे" इत्यत्रोक्तो बृहस्पतिः मन्त्रकृत्तिरश्चीरेव भवति । तेनैव युजासहायेन कृष्णः जरासन्धं जितवानिति । एतेनेतिहासे भीमकृतो जरासन्धवधो

व्याख्यातः । बृहस्पतिस्त्रिषु रूढः । देवतायां यस्या ब्रह्मणस्पतिरित्यपरं नाम । स एव सूक्तभाक् हविर्भाक् च । आङ्गिरसे भरद्वाजस्य पितरि ऋषौ । सामान्यतो मन्त्रद्रष्टरि सङग्रामनेतरि ऋषौ तत्र हि बार्हस्पत्योंशो विद्यते । अत्रेमे ऋचौ भवतः ।

स इत्क्षेति सुधित ओकसि स्वे तस्मा इळा पिन्वते विश्वदानीम् ।
तस्मै विशः स्वयमेवा नमन्ते यस्मिन्ब्रह्मा राजनि पूर्व एति ।
अप्रतीतो जयति सं धनानि प्रतिजन्यान्युत या सजन्या ।
अवस्यवे यो वरिवः कृणोति ब्रह्मणे राजा तमवन्ति देवाः ॥

ऋक्संहिता ४. ५०. ८-९

बार्हस्पत्यमिदं सूक्तम्। सामान्यत ऋषिरत्र बृहस्पतितया स्तूयते ।

ननु भीमः क्षत्रियः कथं ब्रह्मा भवतीति चेत् । निगमोक्तेराजत्वब्रह्मत्वे न जातिपरे । यः सेनाया अधिपतिः प्रजानां वा पालकः स राजा । मन्त्रबलविशिष्टो ब्रह्मा । एकस्यैव राजत्वे ब्रह्मत्वे च न कश्चिद्विरोधः । भ्रममूलम् । स आर्यो जातितः। न तस्मिन्कालेऽधुनातनवंशपरम्परायत्त-ब्राह्मणक्षत्रियविभागः ।

"बृहसपतिनायुजेन्द्रः समाहे" इत्यत्रोक्तः किं द्युतान साहाय्यकात्स्वयं शत्रुं हतवान् । द्युतानकृतं द्रप्सहननमेव किमत्र साहाय्यकात्मना वर्ण्यते । इति संशयः । मन्त्रार्थ उभयथापि कर्तुं शक्यः । इतिहासोक्तिबलाद्भीम एव द्रप्सस्य हन्तेति सुवचम् । छ्ना द्वन्द्वयुद्धभिक्षाकथात्वमूला ।

एकविंशं प्रकरणम्

## अभिमन्युः

अर्जुनस्य पुत्रोऽभिन्युर्महावीर इति भारते प्रसिद्धम् । निगमे च स विषयो विद्यते ।

कुत्साय शुष्णमशुषं नि बर्हीः प्रपित्वे अह्नः कुयवं सहस्रा ।
सद्यो दस्यून्प्र मृण कुत्स्येन प्र सूरश्चक्रं वृहतादभीके ।।
ऋक्संहिता ४. १६. १२ वामदेवः

(हे इन्द्र) कुत्साय । अशुषम् । शुष्णम् । निबर्हीः । कदा । अह्न दिनस्य । प्रतित्वे पूर्वभागे समीपार्थकः प्रपित्वशब्दोऽत्र लक्षणया पूर्वभागवाची । एवं कुयवं सहस्रा सैन्यानि निबर्होः । कुत्सायेत्येव । सद्यस्तस्मिन् दिवसे कुत्स्येन कुत्सपुत्रेण द्वारा । दस्यून् । प्रमृण हतवानसि । अभीके समीपे गत्वा सूरः सूर्यस्य चक्रं रथचक्रं प्रवृहतात् अपहृतवानसि। सूर्यरथचक्रहरणकर्मणोऽद्भुतत्वाच्छुष्णादि-निबर्हणकथानकादनन्तरमपि पूर्ववृत्तस्य स्मारणम् । न क्रमविवक्षा। अत्र कुत्स्य शब्दः सायणस्य वज्रपर्यायः कुत्स एव कुत्स्यमिति तस्य व्युत्पत्तिः । निरर्थककल्पनापेक्षया अस्मदुक्तार्थ एव युक्तः ।

अन्यां पश्यत ऋचम् ।

त्वां देवेषु प्रथमं हवामहे त्वं बभूथ पृथनासु सासहिः ।
सेमं नः कारुमुपमन्युमुद्भिदमिन्द्रः कृणोतु प्रसवे रथं पुरः ।।
ऋक्संहिता १. १०२. ९ कुत्सस्येयं स्तुतिः

हे इन्द्र देवेषु प्रथमं श्रेष्ठं त्वां मनामहे ध्यायामः । त्वं पृतनासु युद्धेषु सासहिः अभिभविता बभूथ अभवः । अथ परोक्षकृतः । इन्द्रः इमं नः उपमन्युं उपमन्युनामकम् । कारुं पुत्रम् । कारुशब्दो निगमेषु पुत्रे च रूढः। "यशसं कारुं कृणुहि स्तवानः" (ऋक्संहिता १. ३१. ८) इत्यादौ तथा प्रयोगदर्शनात् । उद्भिदं शत्रुसैन्यानां भेत्तारम् । प्रसवे युद्धे । पुरः पुरस्ताद्गच्छन्तम् । रथं रथिकं लक्षणया रथो रथिपर्यायः । कृणोतु करोतु ।

इदमेव लिङ्गं अभिमन्योः पद्मव्यूहभेदकथायाः यदुद्भिदमित्याह ।

निगमेऽयमुपमन्युः । इतिहासेऽभिमन्युनामाकृतः । उपमन्युरुपमन्ता सर्वस्पृग्विज्ञानः । अभिमन्युरभितो मन्ता व्यापकविज्ञानः । इत्येतौ शब्दौ प्रायस्तुल्यार्थौ भवतः ।

द्वाविंशं प्रकरणम्

# पञ्चानामेका पत्नी

द्रौपदी पञ्चानां पत्नीति भारते विद्यते । तस्य किं मूलमिति चेत् । अत्रेमे भवतः।

जोषद्यदीमसुर्या सचध्यै विषितस्तुका रोदसी नृमणाः ।
आ सूर्येव विधतो रथं गात्त्वेषप्रतीका नभसो नेत्या ।।
आस्थापयन्त युवतिं युवानः शुभे निमिश्लां विदथेषु पज्राम् ।
अर्को यद्वो मरुतो हविष्मान्गायद्गाथं सुतसोमो दुवस्यन् ।।

ऋक्संहिता १. १६७. ५-६

अत्रायं सायणस्य प्रतिपदार्थः । रोदसी मरुत्पत्नी विद्युद्वा ईमेनं मरुत्सङ्घं जोषत् सेवते किमर्थं सचध्यै सङ्गमनाय । कीदृशी सा असुर्या असुराः क्षेप्तारो मरुतस्तेषां स्वभूताविषितस्तुका विस्तीर्णकेशसङ्घा नृमणाः नृषु मरुत्सु मननवतीत्त्वेष प्रतीका दीप्तावयवा ईदृशी देवी विधतः परिचरतो मरुत्सङ्घस्य रथमागात् आगच्छति । केव विधतस्सूर्यस्य रथं त्वेष प्रतीका सूर्येव सूर्यपत्नीव यद्वा सूर्यदूहिताऽश्विनोः रथमिव आगमने दृष्टान्तः नभसः आदित्यस्य इत्या न गतिरिव ।

युवानः नित्यतरुणाः मरुतः युवतिं नित्यतरुणीं विद्युद्रूपां रोदस्यां स्त्रियमास्थापयन्त आस्थापयन्ति देवतात्वेन रथे धारयन्ति । कीदृशीं तां निमिश्लां नियमेन मिश्रयन्तीं पज्रां पज्रो बलं तद्वतीं शुभे उदके वृष्ट्युदकार्थं शुभे रथ इति योज्यम् । किं निमित्ते दिवथेषु यागेषु कदा यत् यदाहे मरुतो वो युष्मान् अर्कः अर्चनसाधनमन्त्रोपेतः हविष्मान्

सुतसोमः यजमानः दुवस्यन् परिचरन् गाथं स्तोत्रं गायत् गायति । अत्र बहूनां मरुतां एका पत्नीति लिङ्गात्तदवताराणां पाण्डवानां चैका पत्नी कथिता । अत्र पज्रेति वंशसूचकमिव नाम । पज्रा अङ्गिरो विशेषा उच्यन्ते । "तद्वां नरा शंस्यं पज्रियेण कक्षीवता नासत्या परिज्मन्" (ऋक्संहिता १. ११७. ६) इति कक्षीवतः पज्रियत्वोक्तेर्लिङ्गात् । द्रुपदोऽस्थिवंशस्थपर्ववाचकः तज्जाकुण्डलिनी द्रौपदी विद्युच्छक्तिः । कक्षीवतः पुत्री घोषा मन्त्रद्रष्ट्री ऋषिका अर्जुनस्य पत्नीति विज्ञायते। यथा-

आ वो रुवण्युमौशिजो हुवध्यै घोषेव शंसमर्जुनस्य नंशे ।
प्र वः पूष्णे दावन आं अच्छा वोचेय वसुतातिमग्नेः।

ऋक्संहिता १. १२२. ५

(हे अश्विना) औशिजः अहंरुवण्युं रवणीयं (सा.) शंसं स्तोत्रं वः हुवध्यै वोचेय । अर्जुनस्य नंशे व्याप्तौ तात्पर्यतः प्राप्तौ घोषे वममपुत्री घोषेव । किञ्च आदावने दात्रे पूष्णे अच्छ आभिमुख्येन वः युष्मदर्थं वोचय शंसम् । तथा अग्नेः वसुतातिं धनप्राप्तिमभिलक्ष्य शंसं वोचेय । अत्रार्जुनस्य नंशे श्वेतकुष्ठस्य नाशे इति सायणस्यार्थः । नशते व्युत्पन्नं पटं नंशः न नश्यतेः नशतिश्च च्छान्दसो व्याप्त्यर्थको धातुः तस्य लुङि प्रयोगं पश्यत-

इन्द्रश्च मृळयाति नो न नः पश्चादघं नशत् ।
भद्रं भवाति नः पुरः ।।

ऋक्संहिता २. ४१. ११

न नशत् न प्राप्नोति इति सायणव्याख्या । लुङ सर्वलकारार्थत्वाद्वर्तमाने उक्तिः । ततोपि न प्राप्नोत्विति युक्तम् । निघण्टावेष धातुर्व्याप्त्यर्थे पठितः । तात्पर्यतः स प्राप्त्यर्थको भवति । इयमृक् पूर्वमन्त्रोक्तार्थं द्रढयति ।

युवं कवी ष्ठः पर्यश्विना रथं विशो न कुत्सो जरितुर्नशायथः ।
युवोर्ह मक्षा पर्यश्विना मध्वासा भरत निष्कृतं न योषणा ।।
ऋक्संहिता १०. ४०. ६

घोषाय मन्त्रोऽयम् । हे अश्विना कवी युवां रथं परिष्ठः अस्माकं रथं परितिष्ठथः । जरितुः स्तोतुर्युष्मद्भक्तस्येत्यर्थः । कुत्सस्य षष्ठ्यर्थे प्रथमा विशः मनुष्यान् पाण्डवानिति यावत् नशायथः प्रापयथः मामिति शेषः । नकारश्चार्थे । इममेव विषयं पिताऽनुवदति अर्जुनस्य नंशे इति । मक्षा मक्षिका अत्रात्मैव मक्षिकेत्यौपम्येनोच्यते आसा मुखेन हे अश्विना युवोर्ह युष्मदर्थं मधुपरिभरत परिभृतवती स्तोत्रं भृतवतीत्यर्थः तत्र दृष्टान्तः योषणा निष्कृतं पक्वमन्नं यथा बिभर्ति तथा । सायणस्त्वत्र नशायथः प्राप्नुथ इत्येवोक्तवान् । न नाशयथ इति । णिजन्तत्वात्प्रापयत इति योग्यम् । "विशः मनुष्यः बहुवचनार्थे एकवचनम् । कुत्सो न कुस इव युवं परिष्ठः परिभवथः अपि च नशायथः प्राप्नुथः" इति सायणस्यार्थः कुत्स इत्युक्त्या इन्द्रश्च तस्य मते न व्यज्यते यथेन्द्रा कुत्सा तथा युवामिति । जरितुरिति षष्ठ्यन्तं तेन यज्ञं गन्तुमित्यध्याहृतपदाभ्यां योजितम् । व्याख्यानतारम्यं पाठका एव पश्यन्तु । अत्र या घोषा सैव रोदस्यन्यत्र । घोषमिति घोषा । रुदतीति रोदसी । उभयं च तुल्यार्थम् । पत्नेति कक्षीवत्या वचनम् । तस्माद् द्रौपदीकथाया अस्ति मूलम् । अर्जुनस्य नंशे इत्येनेन साक्षादर्जुनपदेनापि कुत्स उक्तः । इदमन्यद्दृढीकरणं कुत्स एवार्जुन इत्यत्र । एकत्रार्जुनस्य नंशे घोषाऽश्विनौ आराधयामासेति वर्तते । अन्यत्र कुत्सस्य विशः प्राप्तवतीति विधते । अर्जुनार्थं तपस्तेपे सर्वान्पाण्डवान् प्रापेति सङ्गतिः । कुत्सस्य मनुष्यान् प्रापयत इत्यत्र कुत्सगृहं लक्षणया चेदेकस्यार्जुनस्य पत्नी स्यात् । तथापि जोषद्यदीमिति मन्त्रार्थबलात्पञ्चानां पत्नीति पक्ष एव बलवान् ।



Sri K. Natesan and Kavyakantha Ganapati Muni
A Sketch by Madam Jane Adams



Kavyakantha Ganapati Muni and his Family
A Sketch by Madam Jane Adams

त्रयोविंशं प्रकरणम्

## कुयव एव दुर्योधनः

"निदुर्योणे कुयवाचं मृधि श्रेत्"

ऋक्संहिता १. १७४. ७

रपत्कविरिन्द्रेति ऋचश्चतुर्थपादोऽयम् । दुर्योणे दुर्गस्थने स्थितम् । कुयवाचम् । मृधि युद्धे । श्रेत् अतापयत् अहिंसीदित्यर्थः । अत्र कुयवाक् कुयवः । कुयवाच एव विकृतं रूपं कुयव इति । प्रान्यच्चक्रमिति मन्त्रे निदुर्योण आवृणङ् मृध्रवाच इत्युक्तम् । उभयत्रापि शुष्णवधादनन्तरं कुयवाचो मृध्रवाचां च वध उच्यते । तस्मात्कुयवागेव सानुचरो भ्रातृयुक्तो वा मृध्रवाच इति पदेनोच्यत इत्यूहितुं शक्यम् । कुयवाक् कुत्सितवाक् । मृध्रवाग्व्यर्थवाक् । तात्पर्यत उभयं तुल्यार्थकम् । शुष्णसाहचर्याल्लिङ्गात्कुयवागेव कुयव इत्यध्यवसीयते । स एव दुर्योधनः । अत्रेदं लिङ्गं भवति ।

युयोप नाभिरुपरस्यायोः प्र पूर्वाभिस्तिरते राष्टि शूरः ।
अञ्जसी कुलिशी वीरपत्नी पयो हिन्वाना उदभिर्भरन्ते ॥

ऋक्संहिता १. १०४. ४ कुत्सः

अत्रेयं सायणव्याख्या । उपरस्य उदकमध्ये सुप्तस्यावस्थितस्य । आयोः परेषामुपद्रवार्थं इतस्ततो गच्छतः कुयवासुरस्य नाभिः सन्नमावसनस्थानं युयोप गूढमासीत् । यथा अन्यैर्न दृश्यतेस्योऽसुरस्तथा अकरोदित्यर्थः । अपि च पूर्वाभिः पूरयित्रीभिरात्मना अपहृताभिरद्भिः प्रतिरते सोऽसुरः प्रवर्धते । स च शूरः शौर्योपेतो राष्टि राजते च । तं इममसुरम् अञ्जसी

आञ्जस्योपेता कुलिशी कुलं शातयन्ती वीरपत्नी वीरस्यपालयित्री एतत्संज्ञिका स्तिस्त्रो नद्यः पयः पयसा हिन्वानाः प्रीणयन्त्यः उदभिरात्मीयैरुदकैर्भरन्ते धारयन्ति ।

अत्र जले गूढत्वाल्लिङ्गात्कुयवो दुर्योधन इत्यवगम्यते । आयुरिति नाम्ना च । आयुशब्दस्य नेतस्ततो गच्छन्नित्यर्थः । उदके सुप्तस्य किमिवेतस्ततो गमनम् । आयुरायुवंश्यः । एकवचनेऽपि गोत्रापत्यलोपः छान्दसः । कुत्सस्य मन्त्रे नाहुषीषु विक्षु इति वर्तते । अत्रायुरिति तस्मादनयोर्ज्ञातित्वं व्यक्तं भवति । अन्यात्र भवति ।

वि सद्यो विश्वा दृंहितान्येषामिन्द्रः पुरः सहसा सप्त दर्दः ।
व्यानवस्य तृत्सवे गयं भाग्जेष्म पूरुं विदथे मृध्रवाचम् ।।

ऋक्संहिता ७. १८. १३

आनवस्य गयं गृहं तृत्सवे आभागिति सायणः । पूरुं मनुष्यमिति । पुरुं पुरुवंश्यं मृध्रवाचं कुयवमित्यर्थो युक्तः । कुयवाङ मृध्रवाक् स्थलेष्वेव तस्य स्थानं दुर्योणमुच्यते । दुर्गं योनं दुर्योणमित्यर्थः । दुर्गं योनं यस्य स इति बहुव्रीहौ दुर्योणशब्दः कुयवाची स्यात् । दुर्योणशब्द एव दुर्योधनशब्दस्य मूलमिति जानीमः । कुयववधघट्टे प्रार्थनैवम् ।

प्रति यत्स्या नीथाऽदर्शि दस्योरोको नाच्छा सदनं जानती गात् ।
अध स्मा नो मधवञ्चर्कृतादिन्मा नो मघेव निष्षपी परा दाः ।।

ऋक्संहिता १. १०४. ५

यत् यदा नीथा पदवी प्रत्यदर्शि अस्माभिर्दृष्टा सा च दस्योः कुयवस्य ओकः स्थानं जानती गौः सदनं न अच्छा आभिमुख्येनगात् । हे मघवन् अध अनन्तरं चर्कृतादित् पुनः पुनः कुयवकृतादपकारात् नः रक्षेति योग्यक्रियाऽध्याहारः । निष्षपीस्त्रीकामः मघेव धनानीव नः मा परादाः मा त्याक्षीः । अत्र कुयवे दस्युपदं गुणवाचकं न जातिवाचकम् ।

दस्युर्हिंसाकामः । दसु उपक्षये इति धातुः । आवृणङ्‌ मृध्रवाच इत्यत्र बहुवचनात् कुयवस्य भ्रातरश्च निगमे प्रसिद्धम् । यथा ऋभवः ऋभुविभ्ववाजाः ।

कुतः दुर्योधनस्य पाण्डवानां च युद्धमभूत् । अत्रेयं भवति ।

वयं जयेम त्वया युजा वृतमस्माकमंशमुदवा भरेभरे ।
अस्मभ्यमिन्द्र वरि वः सुगं कृधि प्र शत्रूणां मघवन्वृष्ण्या रुज ।।
ऋक्संहिता १. १०२. ४

कुत्सस्येयं प्रार्थना । हे इन्द्र । वयं त्वया युजावृतं शत्रुभिरावृतं अस्माकमंशं जयेम । भरे भरे प्रतियुद्धं उदव रक्ष । वरि वः धनं अस्मभ्यं सुगं कृधि । शत्रूणां वृष्ण्या बलानि हे मघवन् आरुज । सायणस्तु वृतमावृण्यन्तं शत्रुं जयेम । अस्माकमंशं युद्धे रक्षेति व्याचष्टे । तस्मात्प्रागुक्तः पक्ष सरलः । सायणपक्षेऽपि अंशरक्षणमस्त्येव । किञ्च क्षेत्रजेषे क्षत्रं सनत् इति लिङ्गं चात्र बलकरे तस्मादंशे भूम्यात्मके शत्रुभिराक्रान्ते तज्जयाय युद्धप्राप्तमिति भारतोक्तं कारणमेव सत्यम् । भरदशं नैतश इत्यत्राप्येवमर्थः कर्तुं शक्यः ।

## द्यूतकथा

किं द्यूतमासीदित्यत्र किञ्चिद्विचार्यते । तत्रेयं भवति ।

कृतं न श्वघ्नी वि चिनोति देवने संवर्गं यन्मघवा सूर्यं जयत् ।
न तत्ते अन्यो अनु वीर्यं शकन्न पुराणो मघवन्नोत नूतनः ।।
ऋक्संहिता १०. ४३. ५

यन्मघवा संवर्गं सर्वानात्मनो वशे कुर्वन्तं सूर्यं शुष्णं जयत् तदा श्वघ्नी कितवः देवने द्यूते अक्षविशेषं न विचिनोति न सङ्गृह्णाति । स्पष्टम् उत्तरार्धम् । अत्रेयं सायणव्यख्या। श्वघ्नी परस्वनां हन्ता कितवो दवने

द्यूते कृतं न यथाहतं विचिनोति तद्वदिन्द्रः सूर्यं मृगयते । क देव्यत आह । यद्यदा मघवा धनवानिन्द्रः संवर्गं सम्यग्वृष्टेर्वर्जयितारं सूर्यमादित्यं तदीयरसापहरणद्वारेण जयति । इति कृतं हतमभूत् हतं च जितं परस्वं तस्य च मार्गणं तदौपम्यं सूर्यान्वेषणे चित्रः समन्वयः। अलं तद्विमर्शनेन । कर्णवधादनन्तरं शकुनेर्देवनक्रिया वैराग्यमुत्पन्नमिति पूर्वार्धस्यार्थः ।

यदा द्रक्ष्यसि सङ्ग्रामे श्वेताश्वं कृष्णसारथिम् ।
एन्द्रमस्त्रं विकुर्वाणमुभे चाप्यग्निमारुते ।।
गाण्डीवस्य च निर्घोषं विस्फूर्जितमिवाशनेः ।
न तदा भविता त्रेता न कृतं द्वापरं न च ।।

महाभारतम् उद्योगपर्व १४२. ६-७

कर्णं प्रति कृष्णवाक्यमेतम् । त्रेताकृतद्वापराण्यक्षविशेषाः । यजुर्वेदे च कृतादिशब्दा अक्षपर्याया उपयुक्ताः । तस्मात्कृतशब्दोऽत्राक्षपर्यायः । श्वघ्नीशब्दभवं प्राकृतपदमेवशकुनिः क्रमात्तत्संस्कृतमारूढम् । तस्माद्यूतं चाभूदिति प्रतीयते ।

चतुर्विंशं प्रकरणम्

## वेतसुतुग्रस्मदिभाः

स वेतसुं दशमायं दशोणिं तूतुजिमिन्द्रः स्वभिष्टिसुम्नः ।
आ तुग्रं शश्वदिमं द्योतनाय मातुर्न सीमुप सृजा इयध्यै ।।

ऋक्संहिता ६. २०. ८

दशमायं दशसिद्धिमन्तं दशबलशब्दव शब्दः । दशोणिं दशणिक् प्रसिद्धं कविम् । तूतुजिं कम्पयन्तम् । वेतसुमेतन्नामकं तुग्रं इभं च । स्वभिष्टिसुम्नः इन्द्रः द्योतनाय कुत्सायसीं एतान् इयध्यै एतवे युद्धे जेतुमित्यर्थः मातुर्न मातुर्यथा पुत्रांस्तद्वत् शश्वत् उपसृजत् वशीचकारेत्यर्थः । इत्यत्र वेतसुतुग्रेभा उक्ताः ।

त्वं रथं प्र भरो योधमृष्वमावो युध्यन्तं वृषभं दशद्युम् ।
त्वं तुग्रं वेतसवे सचाहन् त्वं तुजिं गृणन्तमिन्द्र तूतोः ।।

ऋक्संहिता ६. २६. ४

त्वं योधं योद्धारम्। ऋष्वं दीप्तम्। रथं कुत्सरथं प्रभरः। द्वितीयपादः प्रागेव व्यख्यातः। हे इन्द्र त्वं वेतसवे वेतसोरर्थे युध्यन्तं तुग्रं सचावेतसुना सहैव अहन् हतवानसि गृणन्तं तुजिं कम्पनं कुत्सं तूतोः अवर्धय। इत्यत्र तुग्रवेतस्वोर्वध उक्तः ।

अहं पितेव वेतसूँरभिष्टये तुग्रं कुत्साय स्मदिभं च रन्धयम् ।
अहं भुवं यजमानस्य राजनि प्रयद्भरे तुजये न प्रियाधृषे ।।

ऋक्संहिता १०. ४९. ४

वेतसून् वेतसुं आदराद्बहुवचनम् । तुग्रं स्मदिभं च स्मच्छब्दः स्वर्गवाचीस्मद्दिष्टिरित्यादौ तथाऽर्थदर्शनात् । स्वर्गगजमिति नामार्थः । अभिष्टये कुत्साय पितेव रन्धय वशे अकरवम् । अहं यजमानस्य राजनि प्रकाशे भुवं अभवम् । यत् आधृषे शत्रूणां धर्षकाय तुजये कुत्साय प्रियाप्रियकार्याणि प्रभरे । इत्यत्र वेतसुतुग्रस्मदिभवशीकरणं पुनरुक्तम् । स्मदिभ एवान्यत्रेभ उक्तः । के ते त्रयः। वेतसशब्दो जलप्रदेशप्रभवे गुल्मविशेषे तत्समार्थो वेतसुः । अस्य विदुल इति च नामान्तरम् । नादेयीति च तस्यान्यन्नामविशेषविवक्षायाम् । एष एव गाङ्गेयो भीष्मः स्यात् । स्मदिभः अश्वत्थामा स्यात् । अश्वत्थामा नाम कश्चिद्गजः तस्य मरणे व्याजेन अश्वत्थामा हतः कुञ्जर इति युधिष्ठिर उक्तवानिति भारते । अश्वत्थामा हत इति स्पष्टम् । कुञ्जर इति मन्दं चावादीत्किल । वस्तुतस्तु अश्वत्थामेवेभः स्मदिभश्चोच्यते । इभो हत इति स्पष्टं कुञ्जर इति मन्दं च युधिष्ठिर उक्तवानित्यनुमिमीमहे । तदा अश्वत्थामनामकगजवधोऽनावश्यकः । साधारणगजवधेऽपि सव्याजोऽवलम्बितुं शक्यः । इभशब्दसाहचर्यात्तुग्रो द्रोणः। धनाकाशवरिष्ठेषु तुग्रशब्द इति पाणिनीयवृत्तिः । वरिष्ठत्वमत्रार्थः स्यात् । अथवा तोयं गृह्णातीति तुग्रः कलशः । कलशपर्यायेण द्रोणशब्देन तुग्रस्योक्तिर्नासम्भाव्या । तस्मात्तुग्रो द्रोणः स्यात् । द्रोणशब्दस्य वैदिकमानशब्दतुल्यार्थत्वात् । मानस्येव कुम्भसम्भवत्वं पौराणिकः प्राहेति विज्ञायते । मानस्य कुम्भ सम्भवत्वं च मित्रावरुणयोस्तेजसा उर्वश्यपरनामकविद्युच्छक्तिसन्दीप्तेन शिरसि पतितेन द्वितीयं जन्म । शिर एव तत्र कुम्भत्वेनोपमीयते । तमगस्त्यं वदन्ति माननामानं मानपुत्रत्वात् । मानश्च ऋषिरेव न कलशः । ईदृशमेव वसिष्ठस्य द्वितीयं जन्म । तदत्राप्रकृतत्वान्न व्याख्यास्यामः । अस्माकमृषय इति ग्रन्थे तस्य विस्तरः । दृणाति दारयति शत्रूनिति वा द्रोणः । तुग्रस्यैवेदं नामान्तरं वा स्यात् ।

आप्त्यस्त्रित एव भीष्म इत्येकमनुमानम् । तस्यैव वेतसुरिति नामान्तरम् । अपां पुत्र आप्त्यः । भीष्मश्च गङ्गापुत्रः । अपांनपाद्देव आप्त्यः त्रित इत्युच्यते । ऋषिश्च कश्चित् । अपांनपाच्च दिव्योऽग्निः । तत्रेयं भवति ।

यत्सोममिन्द्रविष्णवि यद्वा घत्रित आप्त्ये ।
यद्वा मरुत्सु मन्दसे समिन्दुभिः ॥

ऋक्संहिता ८. १२. १६

विष्णुमरुत्साहचर्यादत्र त्रितोऽग्निः आप्त्य इति विशेषणादपांनपात् । अनेकस्थलेषु अग्निस्त्रित इत्युच्यते । "निपस्त्यासुत्रितःस्तभूयत्" (१०. ४६. ६) इत्याद्युदाहरणं त्रितस्त्रिषु स्थानेषु स्थितः । त्रेता रूप इत्यर्थः ।

अथ ऋषिपरत्वे-

इमं त्रितो भूर्यविन्ददिच्छन्वैभूवसो मूर्धन्यघ्न्यायाः ।
स शेवृधो जात आ हर्म्येषु नाभिर्युवा भवति रोचनस्य ॥

ऋक्संहिता १०. ४६. ३

वैभूवसः विभुवसः पुत्रः त्रितऋषिः । इममग्निं भूरि इच्छन् अघ्न्यायाः गोः वाचः मूर्धनि अविन्दत् शेवृधः सुखवर्धकः युवासः हर्म्येषु कोशेषु जातः प्रादुर्भूत सन् आसमन्तात् रोचनस्य प्रकाशस्य नाभिः जन्मस्थानं भवति । अयमेव वैभूवस आप्त्यः त्रितस्य पिता विभूवाः माता अब्देवी । अयं च ब्रह्मिष्ठो मन्त्रद्रष्टा । अस्य सूक्तेषु ज्ञानकाण्डं धर्मशास्त्रं च राजेते । अयमेव भीष्मः स्यादित्यत्र अब्देवीपुत्रत्वं लिङ्गम् । अन्यच्च विद्यते।

भद्रो भद्रया सचमान आगात्स्वसरं जारो अभ्येति पश्चात् ।
सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन् रुशद्भिर्वर्णैरभि रामस्थात् ॥

ऋक्संहिता १०. ३. ३

इयं त्रितस्यार्षी । भद्रः मङ्गलः रामः भद्रया मङ्गलया अम्बया सह

सचमानः युक्तः आगात् । यथा जारः जरयिता सूर्यः स्वसारं उषसं पश्चादभ्येति । तद्वत् इति लुप्तोपमारूपकं वा निदर्शनाख्यम् अनन्तरं अग्निः ममेष्टा देवता सुप्रकेतैः द्युभिः वितिष्ठन् रुशद्भिः मन्त्रवागात्मकैः वर्णैः अक्षरैः रामं अभ्यस्थात् अभ्यभवत् । वाचामग्निविभूतित्वात् स्वप्रयुक्तमन्त्राधामेवाग्नेयत्वं वदति । आर्थान्तरेतु भद्रो भद्रयेति पादोऽपि सूर्योषःपरः । रामशब्दो नैशतिमिरपरः यथा सायणो मन्यते । यः कश्चिद्वा भवत्वर्थोऽस्य । भीष्मकृतपरशुरामविजयस्यामेव मन्त्रो मूलमित्यत्र न कश्चित्संशयः । तस्मादितिहासकारस्त्रितमाप्त्यं भीष्म इति जग्राहेति ज्ञायते । भीष्मस्य वस्ववतारत्वं चेममेवार्थं पुष्णाति । प्रभासो वसुश्चापां नपादेव स्यात् । तस्यैव सर्ववस्तुश्रेष्ठत्वात् 'वसूनांपावकश्चास्मी'ति पावकस्यैव प्रभासत्वं वक्तव्यम् । अनलेन पौनरुक्त्यं वारयितुं स दिव्योऽग्निः कथयितव्यः । दिव्याग्नेरेव वस्तुतः पावकत्वम् ।

तुग्रशब्दस्य मेघपर्यायत्वाद्द्रोणः पर्जन्यावतारः स्यात् । स्मदिभश्च ब्रह्मणस्पतेः । कृपस्य नाम युद्धसम्बन्धेन यद्यपि न ज्ञायते तथाप्यस्ति निगमे । यथा–

शग्धी नो अस्य यद्ध पौरमाविथ धिय इन्द्र सिषासतः ।
शग्धि यथा रुशमं श्यावकं कृपमिन्द्र प्रावः स्वर्णरम् ॥

ऋक्संहिता ८. ३. १२

पौरं पूरुवंशभवम् श्यावकं द्रोणं आकर्णपलितः श्याम इत्याद्युक्तेः । कृपं कृपाचार्यं स्वर्णरं रुशमं च पदेन ज्ञायेते कयो र्वाचकेति । अत्र पौरो भीष्मः स्यात्प्रायः ।

ननु त्रितो भीष्मश्चेदेकतद्वितौ तस्य भ्रातरौ वक्तव्यौ । नैषापत्तिः यतः कुत्सश्च त्रित उच्यते । तृतीयत्वात् । तदा एकत्वद्वितौ युधिष्ठिरभीमौ स्याताम् ।

कुत्सस्य त्रितत्वे एषा भवति ।

त्रितः कूपेऽवहितो देवान्हवत ऊतये ।

तच्छुश्राव बृहस्पतिः कृण्वन्नं हूरणादुरु वित्तं मे अस्य रोदसी ।।

ऋक्संहिता १. १०५. १७

अहूरणा दंहसः उत्तार्येति शेषः । इयं कुत्सस्य । कुत्सः कूपे पतितः पातितो वा । देवान् प्रार्थयतेऽत्र सूक्ते । त्रित इत्यात्मानं परोक्षया वाचा वदति ।

इन्द्रं कुत्सो वृत्रहणं शचीपतिं काटे निबाह्ळऋषिरह्वदूतये ।

रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहयसो निष्पिपर्तन ।।

ऋक्संहिता १. १०६. ६

इति कुत्सस्य कूपपातोऽन्यो मन्त्रः। काटशब्दः कूपवाची । प्रायः एतदेव प्रमाणको द्यां पतनं स्यात् । तत्र भीमः अत्रार्जुन इति विशेषः । कुयववधेऽपि अर्जुन एवात्रोच्यते कुम्भकर्णवधे मतभेद इवायं पौराणिकानां प्राचां च मतभेदः । नन्वस्य पांक्तसूक्तस्य त्रितो वैकल्पिकऋषिरिति चेत् त्रितनामलिङ्गात्कात्यायनस्य स सन्देहः । त्रितस्य चेत् त्रितदर्शनमध्ये सूक्तमेतच्छाकलेन संहितं स्यात् न कुत्सदर्शनमध्ये । अपि च कुत्सोऽस्मिन् सूक्ते त्रितमाप्त्यं अन्यं सूचयति । यथा-

अमी ये सप्त रश्मयस्तत्रा मे नाभिरातता ।

त्रितस्तद्वेदापत्यः स जामित्वाय रेभति वित्तं मे अस्य रोदसी ।।

ऋक्संहिता १. १०५. ९

मेनाभिः तदाप्त्यो वेद इति अन्यत्वसूचनम् । जामित्वाय बन्धुत्वं पालयितुं एतेनाप्त्यस्य कुत्सो बन्धुरिति ज्ञायते । काटे पतितं कुत्सं मोचयितुं आप्त्यश्च प्रार्थयामास देवानिति मन्त्रार्थो भवति । आप्त्यस्य

वेत्तृत्वाद्देवेभ्य एव रक्षां प्रार्थयते नोद्धर्तुं मनुष्यप्रयत्नं करोति । अथवा मनुष्यप्रयत्नस्यातीतः स विषयोऽभूत् । स्याद्वने काटः । अन्वेषणाय गतो भीष्मश्च वने पश्येत्काटे पतितम् । अयं सन्दर्भः स्यात् । मृगयागतस्यैषा विपत्तिः स्याच्छत्रुकृता ।

यद्येकतद्वितौ आप्त्यस्यैव भ्रातरौ तदा विदुर एव भीष्मः स्यात् । विदुल एव विदुर उक्तः रलयोरभेदः । विदुलश्च वेतसः । वेतस एव वेतसुः । एकतद्वितौ धृतराष्ट्रपाण्डू स्याताम् । पौराणिकाः पितृव्यं पितामहं चक्रुः तत्पक्षे ।

पञ्चविशं प्रकरणम्

## दुर्योधनस्य भ्रातरः

कुयवप्रकरणे मृध्रवाच इति बहुवचनेन दुर्योधनस्य भ्रातरः सन्तीति सूचितम् । तेषां सङ्ख्यात्र विचार्यते । अत्रेयं भवति ।

पर्शुर्ह नाम मानवी साकं ससूव विंशतिम्
भद्रं भल त्यस्या अभूद्यस्या उदरमामयद्विश्वस्मादिन्द्र उत्तरः ।।

ऋक्संहिता १०. ८६. २३

पर्शुर्नाम मानवी मनुष्यस्त्री मानव्यपि बहूनेकवारं ससूवेति आश्चर्य-द्योतनाय मानवीति निर्देशः । नामशब्दोऽपि अत्राश्चर्यार्थको निपातः । ह पूरणः । विंशतिं पुत्रान् साकमेकदा ससूवाजीजनत् । हे भल शत्रुपुत्राणां भेत्तरिन्द्र भलति भेदनकर्मा । त्यस्यै पर्शवे भद्रं मङ्गलं अभूत् भवतु यस्याः उदरं आमयत् पुष्टमासीत् । बहुपुत्रप्रसूतेरिति ।

अयं मन्त्रो वृषाकपेः कर्णस्यार्षः । अत्र पर्शुर्गान्धारी । एकदा जाताः पुत्रा दुर्योधनादयः । गान्धार्या भद्रा शंसया तत्पुत्राणां भद्रं कृष्णं प्रति याचते । साकं ससूव विंशतिमित्यत्र साकमित्यव्ययं ससूवेति क्रियायाऽन्वेति चेदेकवारं विंशतिपुत्रोत्पत्तिः अत्यन्तमाश्चर्यकर्यपि नेयं कथा असम्भवदूषिता । सप्तपर्यन्तमधुनाऽपि दर्शनात् । यदि विंशतिनान्वेति तर्हि मिलित्वा विंशतिपुत्रानित्यर्थः । तदा नासम्भव-शङ्कालेशोऽपि । इतिहासकारः प्रथममेवार्थं गृहीत्वा एकवारं पुत्रोत्पत्तिमाह । इतिहासमूलसंहिताश्लोके "जनयामास विंशतिम्"

इति पाठो "जनयामास वै शतम्" इति लेखकप्रमादाद्विपरिणतः स्यात् । विंशतिः पञ्चगुणा जाता इत्यर्थस्य प्रतिपादकं वा मूलं स्यात् । पञ्चगुणत्वं विंशत्याऽन्वितं कृतं स्यात्प्रतिसंस्कर्त्रा । विंशतौ जातायामपि सर्वे सम्पूर्णलक्षणा एव जाता इत्यस्य द्योतनाय पञ्चगुणा इति मूलकारेणोक्तं स्यात् । पञ्चगुणानाम पूर्णपञ्चभूतगुणविशिष्टा इत्यर्थः स्यात्तदा । सर्वो खण्डाः जाताः तेषां घृतकुम्भे निक्षेपणाद्वृद्धिरभूदिति कथात्वनन्तरं संयोजितैव ।

मूलसंहितायां विंशतिरेव पुत्रा इति वर्तत इत्यस्यान्यल्लिङ्गमस्ति । कर्णपर्वणि कर्णवधश्रवणादनन्तरं कति मम सैन्या मृताः कत्यवशिष्टा इति धृतराष्ट्रेण पृष्टम् । तथा पाण्डवसेनां प्रति च । तत्र सञ्जयेनोक्ते धृतराष्ट्रपुत्रान्प्रति यावन्तो हता यावन्तः शिष्टाः स विषयो दृश्यते । तदत्रोदाहरामः ।

द्वितीयाध्याये

१. विविंशतिर्महाराज राजपुत्रो महाबलः ।
आनर्त योधांच्छतशो निहत्य निहतो रणे ।। ९

२. तथा पुत्रो विकर्णस्ते क्षत्रधर्ममनुस्मरन्।
क्षीणबाणो हतः शूरः स्थितो ह्यभिमुखः परैः ।। १०
तव पुत्रः सदामर्षी कृतास्त्रोयुद्धदुर्मदः।

३. दुःशासनो महाराज भीमसेनेन पातितः।। २१
बहुशो योधयित्वा तु भीमसेनं महारथम् ।

४. चित्रसेनस्तव सुतो भीमसेनेन पातितः।। २४

५-६. पुत्रस्ते दुर्मुखो राजन्दुःसहश्च महारथः ।
गदया भीमसेनेन निहतौ शूरमाननी। ३४

७-९. दुर्मर्षणो दुर्विषहो दुर्जयश्च महारथः ।
कृत्वा त्वसुकरं कर्म गता वैवस्वतक्षयम् ।।" ३५

एते हताः। अथ शिष्टाः चतुर्थाध्याये

१०. "तथा सुतस्ते ज्वलनार्कवर्णं रथं समास्थाय कुरुप्रवीरः ।
व्यवस्थितः पुरुमित्रो नरेन्द्र व्यभ्रे सूर्यो भ्राजमाने यथा खे ।।१४

११. दुर्योधनो नागकुलस्य मध्ये व्यवस्थितः सिंह इवाबभासे ।
रथेन जाम्बूनदभूषणेन व्यवस्थितः समरे योत्स्यमानः ।।१५

१२-१३. तथा सुषेणोऽप्यसि चर्मपाणिस्तवात्मजः सत्यसेनश्च वीरः ।

१४. व्यवस्थितौ चित्रसेनेन सार्धं हृष्टात्मानौ समरे योद्धुकामौ ।।१६

१५-१७. ह्रीनिषेवो भारत राजपुत्र उग्रायुधः श्रुतवर्मा जयश्च ।

१८-२०. शलश्च सत्यव्रतदुःशलौ च व्यवसिथताः सहसैन्यानराग्र्याः।१७

इति शिष्टाः ।एतेन धार्तराष्ट्राणां नामानि चास्माभिर्ज्ञातानि।

धृतराष्ट्रपुत्राणां पट्टिका द्विवारं दत्ता भरते। उभयोर्यद्यपि नास्ति सामरस्यम् तथापि बहूनि नामानि मिलितानि भवन्ति ।

प्रथमपट्टिकायां ९७ (सप्तनवतिः) नामानि दृश्यन्ते।

कर्णपर्वोक्तेषूदाहृतेषु मध्ये तत्र दृश्यमानानि नामान्येतानि ।

| तत्र दृष्टानि | तत्रादृष्टानि |
|---|---|
| १. दुर्योधनः १. | १. पुरुमित्रः |
| २. दुःशासनः २. | २. सत्यसेनः |
| ३. दुःसह ३. | ३. सत्यव्रतः |

| | |
|---|---|
| ४. दुःशलः ४ | ४. चित्रसेनः |
| ५. दुर्मुखः ५. | ५. चित्रसेनः |
| ६. विविंशतिः ६. | ६. जयः |
| ७. विकर्णः ७. | ७. शलः |
| ८. दुर्मर्षणः १५. | ८. दुर्विषहः |
| ९. सुषेणः ३३. | ९. श्रुतवर्मा |
| १०. उग्रायुधः ४८. | १०. दुर्जयः |

इति दशनामान्येव दृश्यन्ते । द्वितीयपट्टिकायां १०४ (चतुरधिकैकशतं) नामानि । तत्र

| | |
|---|---|
| १. दुर्योधनः १. | ६. दुर्मुखः १४. |
| २. दुःशासनः २. | ७. विविंशतिः १७. |
| ३. दुःसह ३. | ८. विकर्णः १८. |
| ४. दुःशलः ४. | ९. शलः १९. |
| ५. दुर्मर्षणः १३. | १०. उग्रायुधः ४७. |
| | ११. सुषेणः ४८. |

इत्येकादशकर्णवोक्तनामसु दृश्यन्ते । पूर्वतः शलोऽत्राधिकलब्धः । अन्येषु न वसु ।

## १. दुर्विषहः

आदिपर्वणि २०१ अध्याये दुर्योधनो दुर्विषणो दुर्मुखो दुष्प्रधर्षणः इत्यादिना धृतराष्ट्रपुत्रेषु वर्णितः । भीष्मपर्वणि ७७ अध्याये चास्य नाम धृतराष्ट्रपुत्रेषु दृश्यते । तस्मात्तस्य धार्तराष्ट्रत्वे न संशयः।

## २. दुर्जयः

द्रोणपर्वणि १३३ अध्याये अस्य वधो भीमसेनेनास्य धृतराष्ट्रपुत्रत्वं च

स्पष्टमभ्यधायिषाताम्। तत्रैक एव दुर्जयो युध्यन्वर्णितः तस्मादितरस्य तद्विशेषणं कर्तुमशक्यम् । एतन्नाम्नोः स्थाने दुष्प्रधर्षणदुष्पराजयनामनी पतिते इत्यस्माकम् अभिप्रायः ।

### ३. जयः

अयमपि भीष्मपर्वणि ७७ अध्याये दुर्विषहादिभिः साकं कथितः । अस्यैव जयत्सेन इति नामान्तरमिति प्रतिभाति। जयो जयत्सेनशब्देन विशेष्यत इतिवक्तव्यमुभयोः सन्निपाते।

### ४. श्रुतवर्मा

उग्रायुधजययोर्मध्ये पठितत्वाच्छ्रुतवर्मा धार्तराष्ट्र एव भवति । स पट्टिकायां पठितश्चित्रवर्मा सुवर्मादृढवर्मा वा स्यात् ।

### ५. सत्यसेनः

तवात्मजः सत्यसेनश्च वीर इति प्रत्यक्षोक्त्या तस्मिन्विषये न सेन्देहः । स पट्टिकायां पठितः सेनानीः स्यात् ।

**६. सत्यव्रतः ७. चित्रसेन ८. पुरुमित्र** इति त्रीणि नामानि मुख्यान्येव भवन्ति ते पुरुमित्रचित्रसेनौसाक्षात्पुत्रत्वेन कथितौ । सत्यव्रतः शलदुःशलयोर्मध्ये पठितत्वाद्धार्तराष्ट्र एव भवति ।

अन्यच्चात्र प्रमाणमस्ति ।

" तथा पुत्रशतं जज्ञे धृतराष्ट्रस्य धीमतः ।
दुर्योधनप्रभृतयो युयुत्सुः करणस्तथा ।।
ततो दुःशासनश्चैव दुःसहश्चापि भारत ।

दुर्मर्षणो विकर्णश्च चित्रसेन विविंशतिः ।।
जयः सत्यव्रतश्चैव पुरुमित्रश्च भारत ।
वैश्यापुत्रो युयुत्सुश्च एकादश महारथः ।।

आरण्यकपर्व ६४-१६०-१६२

अत्र सत्यव्रतः स्पष्टमुक्तः। अतिप्राधान्येन कीर्तितानां चित्रसेनजय-सत्यव्रतपुरुमित्राणामुभयोः पट्टिकयोर्नामालाभ आश्चर्यकरः। सत्यव्रतः सत्यसन्ध इति चित्रसेनश्चित्र इति पट्टिकायां प्रदर्शिताविति प्रतिभाति पुरुमित्रनाम्नः सदृशं नाम न दृश्यते । तस्य वर्णनं कर्णपर्वण्युत्तम-माहात्म्यद्योतकम् ।एकादशसु महारथेषु च स पठितः ।अस्माकमभि-प्रायस्तु स नाम्ना ऊर्णवाभः ।ऊर्णनाभ इति पट्टिकायां नाम दृश्यते ।

तथापि निगमे ऊर्णवाभपदस्यैव दर्शनाद् गोत्रे च और्णवाभशब्दस्य च दर्शनात्सएको धृतराष्ट्रपुत्रेषु अस्ति मुख्य इति अङ्गीकर्तव्यम् । परिशेषन्यायेन पुरुमित्र एवोर्णवाभः ।अथवा नन्दः ।नन्दयतिमित्राणीति व्युत्पत्त्या। पुरुमित्रशब्दतुल्यार्थकः।

### ९. द्वितीयश्चित्रसेनः

अयं पट्टिकायां पठित उपचित्रः स्यात् ।तस्मादस्माभिरुपचित्रसेन इति व्यवहरणीयः ।अत्यन्तं सदृशाकृतित्वादेकनामत्वम् ।

यत्तु धृतराष्ट्रस्यान्यागान्धारराजपुत्र्यश्च पन्त्यः परः शतं राजपुत्र्यः पत्न्यश्चो ८ः ११९ अध्याये तेषां श्लोकानां केषुचित्पुस्तकेष्वदर्शनेनाधिक-पाठत्वादन्यत्र तत्प्रस्तावाभावाच्चोपेक्ष्यं तत्कथानकम् । युयुत्सुस्तु अस्त्येव तस्य पुत्रः पत्न्यां द्वितीयायां बहुषु स्थलेषु तत्प्रस्तावदर्शनात् । चित्रसेनसार्धमित्यत्र चित्रसेनेन बलेन साकमित्यर्थे एकोनविंशतिः

पुत्राः । विंशतिसङ्ख्यापूरणं भवति दुःसलयेति सर्वमनवद्यम् ।

पर्शोर्गान्धारीत्वानुमानं कर्णस्याशंसया । सायणस्तु पर्शुं मनोर्दुहितारं काञ्चनमृगीं मन्यते । भलं चेन्द्रस्य बाणम् । कथाऽप्रसिद्ध प्रार्थनं च निष्प्रयोजनम् । सन्दर्भश्च नास्ति इन्द्रबाणस्य मृगीपुत्रेषु गमनाय । भलशब्दो भल्लशब्दपर्याय इति धिया सबाणं व्याख्यातवान् । शरवत्सान्परादद इत्यत्र शरशब्देनेन्द्रः कथितः एवमत्र भलशब्देन ।

अन्यच्चास्ति लिङ्गं पर्शुपुत्रा गान्धारी पुत्रा इत्यत्र ।

सं मा तपन्त्यभितः सपत्नीरिव पर्शवः ।
मूषो न शिश्ना व्यन्दन्ति माध्यः स्तोतारं ते शतक्रतो ।
वित्तं मे अस्य रोदसी ।।

ऋक्संहिता १. १०५. ८

कुत्सस्य कूपपतितस्येयमुक्तिः । पर्शवः गान्धारीपुत्राः अपत्यप्रत्ययलोपाः । सपत्नीः शत्रव इव विश्वा अतिद्विषइत्यादाविव स्त्रीलिङ्गम् । अभितः मासन्तपन्ति । तेषु सन्तापेषु इदमेकम् । आध्यो मनोव्याधयः शिश्ना हिंसकाः मूषो न मूषका इव माव्यन्दन्ति खादन्ति मे असय रोदसी वित्तम् । ईदृशानि मम कष्टानि ज्ञात्वा मां द्यावापृथिव्यौ रक्षतामित्यर्थः । अत्र पर्शवः कूपपर्शवो नाम कूपभित्तय इति सायणः । उभयं च वैदिकरहस्यचरित्रानबोधनमूलम् । कूपभित्तीनां तापकत्वं सन्दर्भहीनम् ।

षड्विंशं प्रकरणम्

# गान्धारी अनार्या

गान्धारी आर्यजातीया न भवति । यतोऽस्य श्वघ्नी भ्राता । श्वघ्नीती सामान्यतः कितवपर्यायं मन्यमानो यास्कः स्वघ्नीत्यस्य विकृतं रूपं मेने । तत् जातिवाचकं पदम् । न गुणवाचकम् । श्वघ्नाः निषादाः अस्य सन्तीति श्वघ्नी श्वघ्नराज इत्यर्थः । यथा राष्ट्रपतेश्चक्रीति प्रयोगस्तद्वत् । मरुत्वानितिवद्वा । निगमे श्वघ्नीपदं निषादीपरतया प्रयुक्तमन्यत्र दृश्यते ।

पुनःपुनर्जायमाना पुराणी समानं वर्णमभि शुम्भमाना ।
श्वघ्नीव कृत्नुर्विज आमिनाना मर्तस्य देवी जरयन्त्यायुः ।।

ऋक्संहिता १. ९२. १०

कृत्नुः कर्तनशीला श्वघ्नीव व्याधस्त्रीव इति सायणव्यख्या । पर्शोः पुत्रत्वात्पार्शवा दुर्योधनादयः । तत्पदमवलम्ब्यैवार्याच्छूद्रायां जातः पारशव इति अर्वाञ्चो व्याख्यातवन्तः । यथा पार्शवस्तथेति औपम्यप्रयुक्तं पदं कालक्रमेण वाचकपदमासीत् ।

पार्शवपदं पारशवपदं विपरिणमय्यानन्तरं तस्य निर्वचनमन्यथा कर्तुमारेभिरे । पारयन्नेव शवो भवति तस्मात्पारशव इति व्युत्पत्तिरुक्ता । द्वादशविधेषु पुत्रेषु शूद्रापुत्रो द्वादशस्त्रैवर्णिकस्योक्तः । वासिष्ठस्मृतौ अदायादबान्धवेषु षष्ठः शूद्रापुत्र इति ।

| दायादबान्धवाः | अदायादबान्धवाः |
| --- | --- |
| १.औरसः | १. सहोढः |
| २. क्षेत्रजः | २. दत्तकः |
| ३. पुत्रिका अस्यांयो इति नियमेन दत्ता | ३. क्रीतः |
| ४. पौनर्भवःपुनर्वोढुः | ४. स्वयंदत्तः |
| ५. कानीनः | ५. अपविद्धः |
| ६. गूढजः मातामहस्य गृहे गूढोत्पन्नः | ६. शूद्रापुत्रः |



अनन्तरे काले ब्राह्मणाच्छूद्रायां जातो निषादः पारशवश्चेत्युक्तवन्तः । गान्धारदेशश्च तस्मिन्कालेऽपि अनार्यदेश एव स्यात् ।

सप्तविंशं प्रकरणम्

# द्रुगेव धृतराष्ट्रः

"महो द्रुहो अप विश्वायु धायि" (ऋक्संहिता ४. २८. २, ६. २०. ५) इति द्विःप्रयुक्तं निगमेषु । तत्र यो द्रुक् द्रुहो उक्तः स धृतराष्ट्र एव भवति । तत्रेदं लिङ्गम् ।

द्रुहो निषत्ता पृशनी चिदेवैः पुरू शंसेन वावृधुष्ट इन्द्रम् ।
अभीवृतेव ता महापदेन ध्वान्तात्प्रपित्वादुदरन्त गर्भाः ॥

ऋक्संहिता १०. ७३. २

द्रुः द्रुहस्य षष्ठ्यर्थे प्रथमा । हकारान्तं वा पदम् । सम्बन्धिनी पृशनी पर्शुः पर्शोरिव पृशनीति नामान्तरम् । उभे अपि पदे पृश्निसमव्युत्पत्ती । पृश्निशब्दो दिवो वा सूर्यस्य वेति निघण्टुः । स्पृष्टा भासमिति दिवः पक्षे सैवात्र भवति । अतीव सुन्दरीत्यर्थः । सा एवैश्चित् "एवैश्चर्षणीनाम्" इति निगमस्य व्याख्यानावसरे एवैः कामैरयनैरवनैर्वा इति व्याचष्टे । अत्रावनैरिति व्याख्यानम् । अवनैः रक्षकैश्चित्संयुक्ता निषत्ता प्रसवायेति प्रकरणसामार्थ्याल्लभ्यते । ते रक्षकाः पुरु पुरुणा प्रभूतेन शंसेन स्तोत्रेण इन्द्रं वावृधुः। महापदेन महास्थानेन व्रजेन अभीवृतेव आवृतेव आवृता इव स्थिता उदरदेशे बद्धा इव स्थिता इत्यर्थः । ता ते गर्भाप्रपित्वात् प्रकृष्टान्नात् ध्वान्तात्तमः प्रदेशात् प्रपित्वादिति विशेषणलिङ्गात् ध्वान्तादित्युदरदेश उच्यते गर्भाः उदरन्त उदगच्छन् बहिर्निर्गता इत्यर्थः । अथवा महापदेन महाचरणेन अभीवृतेव लक्षणया ताडिता इवेति वा साक्षात्क्रियान्वय्यौपम्यम् । आसन्नात्तमः प्रदेशादिति वा ध्वान्तात्प्रपित्वादित्यस्यार्थः।

सायणस्तु "द्रुहो द्रोग्धुरिन्द्रस्य पृशनी सेना निषत्ता इन्द्रसमीपे निषण्णा एवैर्गन्तृभिर्मरुद्भिः सहितमिन्द्रं निषण्णेति सम्बन्धः । तेऽपि मरुतः पुरु प्रभुतेन शंसेन स्तोत्रेण वावृधुरवर्धन्त । वृत्रं जिघासन्तं अथ महापदेन महता व्रजेन अभीवृतेन परिवृतानीव गवादीनि तानि यथा आवरणापगमे निर्गच्छन्ति तद्वत् तान्युदकानि ध्वान्तादन्धकाररूपात् प्रपित्वादासन्नात् वृत्रात् गर्भाः गर्भभूतान्युदकानि उदरन्त उदगच्छन्।" इति। अत्र द्रुह इतीन्द्रनामा प्रसिद्धमयोग्यं च । सेनोपवेशस्यात्र सन्दर्भो नास्ति कथायास्तवाधिभौतिकत्वात् । तस्मादियं चरित्रपरैव ऋक् । अन्यत्र द्रुहशब्दस्य दुर्योधनपक्षपातिपरत्वेन प्रयोगश्चात्र लिङ्गम् ।

अष्टाविंशं प्रकरणम्

## पाण्डवपुरोहितः कवषः

अस्ति कावषेयो जन्मेजयस्य सम्राजः महाभिषेकं चकारेति अश्वमेधं च याजयामासेति ऐतरयेकथा । भागवते चेयमनूक्ता ।

कावषेयं पुरोधाय तुरं तुरगमेधयाट् ।
समन्तात्पृथिवीं सर्वां जित्वा यक्ष्यति चाध्वरैः ।।

कवषस्य गोत्रापत्यं कावषेयः । एतेन कवषस्य पाण्डवानां कश्चित्सम्बन्धो यदि ज्ञायेत तदुपपन्नतरं स्यात् । ज्ञायते च । तत्रेमे भवतः कवषस्यार्षे सूक्ते ।

प्र मा युयुज्रे प्रयुजो जनानां वहामि स्म पूषणमन्तरेण ।
विश्वे देवासो अध मामक्षरन् दुःशासुरागादिति घोष आसीत् ।।
सं मा तपन्त्यभितः सपत्नीरिव पर्शवः ।
नि बाधते अमतिर्नग्नता जसुर्वेर्न वेर्वायतेऽमतिः ।।

ऋक्संहिता १०. ३३. १-२

जनानां दस्यूनां प्रयुजः सेवकाः मा मां गृहीतुमिति शेषः । प्रयुयुजे प्रयुक्ताः । अन्तरेण हृदा पूषणं मार्गे दस्युबाधानिवारकत्वेन प्रसिद्धं देवं वहामि स्म ऊढवानस्मि । अध विश्वेदेवासः मामरक्षन् । अत्र रक्षायां भयनिमित्तं विवृणोति । दुःशासु दुःशासनः आगात् आगच्छत् इति घोषः आसीत् । मार्गमध्ये । आत्मग्रहणाय प्रयुक्तेभ्यः रक्षार्थं मार्गे पूषणं ध्यायतः अपक्रामतः दुःशासनः दस्युजननायकः आगादिति

घोषश्च श्रुतः । तदा तस्मान्महाभयात् देवा मामरक्षन्निति तात्पर्यम् । यथा दुःशासनआत्मानं न गृह्णीयात्तथाऽरक्षन्नित्यर्थः ।

पर्शवः धार्तराष्ट्राः सपत्नीरिव द्विष इव मा मां अभितः सन्तपन्ति । अमतिः दारिद्र्यं विनिबाधते । नग्नता योग्यवस्त्राभावः नसुः कार्श्यं च निबाधते । मति बुद्धिः वेर्न पक्षिण इव वेवीयते कम्पते यथा व्याधभयात् पक्षिणो मतिस्तथा पर्शूनां भयान्मम मतिरिति सादृश्यसङ्गतिः । अनन्तरमिन्द्रप्रार्थनेन कुरुश्रवणराजाश्रयबलादात्म-बाधानिवारितेति वर्तते ।

सायणस्तु जनानां यजमानानां प्रयुजः प्रयोक्तारो देवाः प्रयुयुज्रे प्रतियुक्तवन्तः इत्यर्थं करोति कुरुश्रवणं प्रतीत्यध्याहरं करोति । चतुर्थपादे दुःशासुः दुःशासनः केनापि शासितुमशक्यः ऋषिरागच्छदिति मार्गमध्ये घोष आसीत् इति वदति । एवं चेत् देवेभ्यो रक्षा उत्तरऋचि प्रोक्ता बाधा च सन्दर्भहीने भवतः । देवैः प्रेरितः कुरुश्रवणं प्रति यदागच्छति तदा मार्गमध्य एव एतावती बाधेति सन्दर्भहीनो विषयः ।

उत्तरस्यामृचि प्रार्थनां च पश्यत ।

मूषो न शिश्ना व्यन्दन्ति माध्यः स्तोतारं ते शतक्रतो ।
सकृत्सु नो मघवन्निन्द्र मृळयाऽधा पितेव नो भव ॥

ऋक्संहिता १०.३३.३

केवलमार्गश्रमस्य नैतादृशं वर्णनमुपपद्यते । ईदृशस्थितौ आत्मानं प्रत्येव दुःशासुरागादिति कथं घोषः । पूषध्यानं च दस्युबाधारभावे सन्दर्भ-हीनम् । पूषसूक्तेषु दस्यु बाधानिवारणं प्रार्थ्यते ।

अयं च कवषस्तुल्यशत्रुत्वात्पाण्डवपक्षीय इति गम्यते । कुत्सदृष्ट-मन्त्रमेवानूद्य मन्त्रद्वये स्वोक्तार्धार्चाभ्यां च पूरणाच्च तत्समर्थ्यते । कावषेयस्य जन्मेजय पौरोहित्याल्लिङ्गात् तत्र कूटस्थः कवषः पाण्डवानां पुरोहित इत्यनुमिमीमहे । पाण्डवेषु राज्यभ्रष्टेष्वनन्तरं कुरुश्रवणं नाम त्रासदस्यवं राजानमाश्रितवान्कालं कियन्तम् । अनन्तरं मित्रातिथिपुत्रं उपमश्रवसं चेति ज्ञायते । अपि च दुर्शेणापरपर्यायस्य कुयवस्यानुजेषु पर्शुषु प्रसिद्धः दुःशासनो वर्तत इति ज्ञातम् ।

एकोनत्रिंशं प्रकरणम्

# द्यूतकथाविशेषः

कवषस्य ऐलूषस्य (इलूषपुत्रस्य) मौजवतस्याक्षस्य वा आर्षेये सूक्ते ऋगेका दृश्यते ।

न मा मिमेथ न जिहीळ एषा शिवा सखिभ्य उत मह्यमासीत् ।
अक्षस्याहमेकपरस्य हेतोरनुव्रतामप जायामरोधम् ।।

ऋक्संहिता १०. ३४. २

अपरोधम् परित्यक्तवानस्मीति सायणः । पणीकृतवानस्मीति वस्तुतोऽर्थः । न मिमेथ न चुक्रोध न जिहोळ नासूयांचकार न लज्जितवतीति सायणः ।

अयं मन्त्रो यदि कवषस्य तदा स युधिष्ठिरो नेति निश्चयेन वक्तुं शक्यते । युधिष्ठिरश्चेत्कुरुश्रवणं राजानं धनार्थं नोपसर्पेत् । यदि मोजवतोऽक्षस्तर्हि मुजवच्छब्दस्य पर्वतविशेषपर्यायत्वात्तत्र भव इत्यर्थं कृत्वाऽक्षशब्दमक्षप्रियत्वाद्युधिष्ठिरपरं यदि कुर्मः तर्हि द्यूते भार्यायाऽपि पणनं भारतोक्तं समर्थितं स्यात् । तदा मुजवत्पर्वत एव शतश्रुङ्गपर्वतो वक्तव्यः।

तस्मिन्पर्वते सोमः किल विस्तारेणोत्पद्यते । यदि मोजवतोऽक्षोऽन्यः तर्हि भारतोक्तं द्यूते भार्यायाः पणीकरणं निर्मूलमेव । यथाकथञ्चिद्वा भवतु । द्यूते भार्यायाः पणीकरणोक्तेर्बीजं तु इयमेव ऋगित्यत्र न कश्चित्सन्देहः । तस्मादितिहासकारो मौजवतमक्षं युधिष्ठिरत्वेनैव स्वीकृतवानिति वक्तव्यम् ।

## त्रिंशं प्रकरणम्

# इन्द्रपुत्राः

इन्द्रपुत्रेषु निगमे मन्त्रद्रष्टारः सन्ति । विमदः, वसुक्रः, सर्वहरिः, अप्रतिरथः, लवः, जयः, वृषाकपिश्चेति सप्त। कन्या विराण्णाम ।

### विमदः

विमदः एव प्रसिद्धः साम्ब इति वक्तुमस्त्याधारः ।

अधेनुं दस्रा स्तर्यं विषक्तामपिन्वतं शयवे अश्विना गाम् ।
युवं शचीभिर्विमदाय जायां न्यूहथुः पुरुमित्रस्य योषाम् ।।

ऋक्संहिता १. ११७. २०

अत्र द्वितीयोऽर्धर्चोऽस्माकं मुख्यः । हे अश्विनौ युवां शचीभिः कर्मभिः पुरुमित्रस्य योषां कन्यां जायां न्यूहथुः । अत्र पुरुमित्रो दुर्योधनाऽनुजः । तस्य पुत्रीं कुमारो विमदो अपहृतवान् तदा तं शत्रवः पृष्ठतोऽन्वयुः । तस्मिंत्समये अश्विनौ तमरक्षतामित्याख्यानम् । तस्मिंत्समये विमदः कुमार एव युद्धं च मध्ये प्रसक्तमित्यत्र इयमृग्भवति ।

नासत्याभ्यां बर्हिरिव प्र वृञ्जे स्तोमाँ इयर्म्यभ्रियेव वातः ।
यावर्भगाय विमदाय जायां सेनाजुवा न्यूहथू रथेन ।।

ऋक्संहिता १. ११६. १

अर्भगाय अर्भकाय कौमारे वर्तमानस्येत्यर्थः । सेनाजुवा रथेनेत्युक्तितः युद्धसन्दर्भो गम्यते । दुर्योधनानुजस्य पुत्री दुर्योधनपुत्रीति ऐतिहासिकाः सम्बन्धादाहुः । सैव लक्षणा स्यात् । विमद एव साम्बः । अयं

दुर्योधनकर्णयोः शत्रुपक्ष एवासीदिति ज्ञायते । यतः

आ न इन्द्र पृक्षसेऽस्माकं ब्रह्मोद्यतम् ।
तत्त्वा याचामहेऽवः शुष्णं यद्धन्नमानुषम् ।।

ऋक्संहिता १०. २२. ७

पृक्षसे सम्पर्चय । अनया शुष्णहननरूपं रक्षणं प्रार्थ्यते ।

## वसुक्रः

अयं ब्रह्मिष्ठऋषिः । अस्य दर्शनमतीव गभीरम् । अयमपि कुत्सप्रियः । यदाह-

प्र ते अस्या उषसः प्रापरस्या नृतौ स्याम नृतमस्य नृणाम् ।
अनु त्रिशोकः शतमावहन्नॄन्कुत्सेन रथो यो असत्ससवान् ।।

ऋक्संहिता १०. २९. २

अस्य पत्नी च मन्त्रद्रष्ट्री इति ।

## सर्वहरिः

एकस्य हरिसूक्तस्य अयं वैकल्पिकऋषिः पठ्यते कात्यायनेन । वरुराङ्गिरसः सर्वहरिर्वा ऐन्द्र इति ।

## अप्रतिरथः

साङ्ग्रामिकसूक्तस्य द्रष्टा । महावीरवद्दृश्यते । अस्य मन्त्राः अथर्ववेदेऽपि सुतरां प्रसिद्धत्वेन गृहीताः । अयं पाण्डवपक्षपाती ज्ञायते । यत्सूक्तान्ते पाण्डवानेवमाशास्ते ।

प्रेता जयता नर इन्द्रो वः शर्म यच्छतु ।
उग्रा वः सन्तु बाहोऽनाधृष्या यथाऽसथ ।।

ऋक्संहिता १०. १०३. १३

हे नरः पाण्डवाः इत्यर्थो भवति । सामान्यतो नेतार इति कुतोऽर्थो मा भूत्। इयं मारुती वेति कात्यायनो वदति । किं लिङ्गमुपलभ्य । नरो मरुत इति । ऋषिणा मरुतां जयाशंसां च अवतारपुरुषामेव सन्दर्भयुक्ता भवेत् ।

अप्रतिरथ एव सात्यकिरित्यस्मन्मतम् । सत्यकायाः पुत्रः सात्यकिरिति व्युत्पत्तिः । कप्रत्ययः अपत्यप्रत्ययमहितस्य सुखश्रवणार्थं सत्यैव सत्यका । हरिवंशस्य खिलत्वादैतिहासिकाः सात्यकिनाम्ना वञ्चितास्तं कृष्णस्य ज्ञातिसोदरमवर्णयन् । वस्तुतः स पुत्रः । इदमन्यत्तत्र लिङ्गम् ।

बृहस्पते परि दीया रथेन रक्षोहाऽमित्राँ अपबाधमानः ।
प्रभञ्जत्सेनाः प्रमृणा युधा जयन्नस्माकमेध्यविता रथानाम् ।।

ऋक्संहिता १०. १०३. ४

इत्यत्र युधा युद्धं कुर्वताऽऽत्मना द्वारेति वदति युच्छब्द एष एव युयधान-नाम्नो मूलम् ।

अन्यच्च स्यादस्य भ्रातृस्थानीयत्वोक्तेर्मूलम् । सत्यायाः पिता सत्यैकसंतानः । तस्मात्तस्याः पुत्रेष्वेकः मातामहगृहं शिश्रिये । तस्य च मातामहस्य शिनिगोत्रसम्भवत्वाच्छैनेयत्वमस्य ।
भागवते द्वौ शिनी वर्ण्येते ।

वृष्णे सुमित्रः पुत्रोऽभूद्युधाजिच्चपरन्तपः ।
शिनिस्तस्यानमित्रश्च निम्नोऽभूदनमित्रतः ।।
सत्राजितः प्रसेनश्चनिम्नस्याप्यासतुः सुतौ ।।

नवमस्कन्दः २४. १२. १३

इत्यत्र शिनेः प्रपौत्रः सत्राजिद्वर्णितः । सात्यकेर्वृष्णिवीरत्वं चोपपन्नं

स्यादत्र । यतः शिनेश्च मूलपुरुषो वृष्णिः ।

विष्णुपुराणादिषु सात्यकेः पितृत्वेनोक्तः सत्यकस्तु अनमित्र-पुत्रस्यैवान्यस्य शिनेः पुत्रः कथ्यते । "अनमित्रसुतो योऽन्यः शिनिस्तस्याथ सत्यकः।" इति ।

शिनिः

अनमित्रः

| | |
|---|---|
| निम्नः | शिनिः |
| सत्राजित् | सत्यकः |

सत्यकस्य पिता द्वितीयः शिनिः । शैलेयत्वं सात्यकित्वं चाभिलक्ष्य मूलभारतस्थं हरिवंशस्य खिलत्वात् द्वितीयशिनेः पौत्रं तं वर्णयामासुः । यदि भागवतोक्तवंशावलीं पश्यामस्तर्हि कयापि न दिशा वसुदेवस्य सत्यकः सोदरस्थानीयो न भवति । एकं व्याख्यानमनुसृत्य (श्रीधरस्य) वृष्णेः दशमः पुरुषो वसुदेवः षष्ठः पुरुषः सत्यकः । वसुदेवस्य सत्यको वृद्धप्रपितामहस्थानीयो ज्ञातिः स्यात् । अन्यत् व्याख्यानमनुसृत्य (पदशक्तितः) वसुदेवः पञ्चमः सत्यकः षष्ठः तदा पुत्रस्थानीयो ज्ञातिः ।

## जयः

अयमपीन्द्राण्याः सत्याया एव पुत्रः । भागवतोक्तवंशावल्यां अयं सात्यकिपुत्रः कथ्यते । तत् प्रामादिकम् । अयमेव पौराणिकानां जयन्तः । महाविक्रमः । अस्य सूक्तमपि साङ्ग्रामिकं सुप्रसिद्धम् ।

## सर्वहरिः

अयं सत्याया अपरः पुत्रः स्यात्। मम पुत्राः शत्रुहण इति बहुवचनाल्लिङ्गात् ।

## लवः

अयमिषिरायाः पुत्रः स्यात् । रामपुत्रसदृशं नामेदम् । अस्यात्मस्तुतिरतीवाद्भुता । अयं चाधिकं सोमपः । अयमेव प्रायः प्रद्युम्नः स्यात् ।

## विराट्

सत्यायाः पुत्री विराट् । "अथो मे दुहिता विराट्" इति लिङ्गात् ।

एकत्रिंशं प्रकरणम्

## कर्णजन्मरहस्यम्

कर्णः कानीन इति प्रसिद्धिर्भारते । स किल सूर्यात् कुन्त्यां जातः । अत्र निगमलिङ्गानि किञ्चिद्व्यत्यासेनेतिहासोक्तं समर्थयन्ति । तद्विवरणात्प्राक् तस्यान्यन्नाम निगमप्रसिद्धं प्रदर्शयामः । यन्नामार्वाचां वाङ्मये विष्णुपरं शिवपरं वा । तद्गभीरं वृषाकपिरिति नाम । तत्र नामैकदेशे नामग्रहणमिति न्यायेन वृषो वृषेति वा नाम भारते स्वीकृतम् ।

पश्यतेमं भारतश्लोकम् ।

ब्रह्मण्यः सत्यवादी च तपस्वी विजितेन्द्रियः ।
रिपुष्वपि दयावांश्च तस्मात्कर्णो वृषा स्मृतः ।।

उदीच्यास्तु वृषः स्मृतः इति पाठं संस्कृतवन्तः । अन्यत्रापि तस्य वृष इति नामास्तीति तदेवात्रः भाव्यमिति । उभे अपि तस्य वाचकनामनी । अर्थं उभयोस्तुल्यः ।

ननु धर्मस्य वृष इत्येव नाम न वृषेति चेत् । अस्ति वृषेति च नाम । अभिमतफलवर्षकत्वात् । अथ वावृषशब्द एवास्तु तथापि समासे संहितायां वृषशब्दस्य दीर्घः । ततो वृषाकपिरिति नाम ।

अत्रेदं भारतोक्तं निर्वचनं भवति।

वृषो हि भगवान्धर्मः ख्यातो लोकेषु भारत ।
निघण्टुकपदाख्याने विद्धि मां वृषमुत्तमम् ।।
कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते ।
तस्माद्वृषाकपिं प्राह कश्यपो मां प्रजापतिः ।।

वृषश्चासौ कपिश्च वृषाकपिरिति ।वुषा कम्पनो वृषाकपिरिति यास्कस्य निर्वचनम् । आदित्यो वृषाकपिस्तस्य मतेन ।

अस्ति वृषाकपेरार्षमेकं सूक्तम् । स च ऋषिरैन्द्र इत्युच्यते । तस्येन्द्रेणेन्द्राण्या च यः कर्णत्वे वृषनामकर्णस्यैकं लिङ्गम् । प्रत्यक्षं च स कर्ण उच्यते । पश्यैतामृचम् ।

यमिमं त्वं वृषाकपिं प्रियमिन्द्राभिरक्षसि ।
श्वा न्वस्य जम्भिषदपि कर्णे वराहयुर्विश्वस्मादिन्द्र उत्तरः ।।

ऋक्संहिता १०. ८६. ४

यं त्वं वृषाकपिं प्रियं हे इन्द्र अभिरक्षसि । अस्य इमं द्वितीयार्थो षष्ठी श्वाजम्भिषत् खादतु कर्णे अस्मिन्वृषाकपौ वराहयुः वराहमिच्छुर्भवतु । यथा वराहं प्रीत्या वनश्वा भक्षयति एवं इमं कर्णं यमस्य श्वा भक्षयत्वित्यर्थः । पुष्टाङ्गेऽस्मिन्वराहं पश्यन्नित्यौपम्यस्वारस्यं पदार्थवृत्ति-निदर्शनमुखेन। अथवा अस्य अस्मिन्कर्णे वराहयुर्जम्भिषत् तात्पर्यतः कर्णमित्येकवाक्यतयाऽन्वयः । "दिवोदासादमिथिग्वस्य" (ऋक्संहिता ६. ४७. २२) इत्यादाविव विशेष्यविशेषयोर्विभक्तिव्यत्ययः छान्दसः । सायणस्तु श्वान्यस्य जम्भिषदिति वाक्यं पूरयित्वा वराहयुः श्वा कर्णे वृषाकपेः श्रोत्रे गृह्णात्विति अध्याहारेण द्वितीयं वाक्यं पूरयति । अध्याहारं विनाऽर्थसिद्धेस्तथा न धावितव्यम् । इतीन्द्राणी वृषाकपिं

शपति । किं कारणं शापे ।

प्रिया तष्टानि मे कपिर्व्यक्ता व्युदूदुषत् ।
शिरो न्वस्य राविषं न सुगं दुष्कृते भुवम्
विश्वस्मादिन्द्र उत्तरः ।।

ऋक्संहिता १०. ८६. ५

कपिः वृषाकपिः नामैकदेशे नामग्रहणम् । कपिरत्र वराहवाचक इति न विस्मर्तव्यम् । वराहादृशत्वाद्वराहत्वम् । व्यक्ता अतीव प्रकाशमानानि मे प्रियाणि तष्टा तष्टानि गृहाणि अदूदुषत् व्यध्वंसयदित्यर्थः दण्डयात्रायेति बोद्धव्यम् । दण्डयात्रायां नगरभञ्जने हर्म्याणि च भग्नानि भवेयुरिति सम्भवः । उद्यानवनभङ्गो वा मन्त्रार्थः । अस्य कपेः शिरः नु क्षिप्रं राविषं लुर्नायाम् । दुष्कृते दुष्टकार्यकारिणे सुगं सुखं न भुवं न भवेयम् । विश्वस्मादिन्द्र उत्तरः । भारते च कर्णदिग्विजयप्रस्तावे कर्णकृतवृष्णिवीरजयः सूचितः । प्रायस्तदानीं कृष्णो देवी च सपुत्रा नगरे न स्यात् । अन्ये सर्वे जिताः स्युः। "वृष्णिभिः सह सङ्गम्य पश्चिमामपि सोऽजयत्।।" (भागवतम् २५५. १७) । वृष्णीनां पराजयमेवं कविरर्धश्लोकेन सङ्कोचितवान् । तदपि सन्दिग्धमेवाकरोत् ।

किमयं त्वां वृषाकपिश्चकार हरितो मृगः ।
यस्मा इरज्यसीदु न्वर्यो वा पुष्टिमद्वसु विश्वस्मादिन्द्र उत्तरः ।।

ऋक्संहिता १०. ८६. ३

अत्र हरितो मृग इति वराहस्यैवौपम्येनाभिधानम् । सायणस्तु प्रिया तष्टानि इत्यत्र वृषाकपिसम्बन्धी कश्चित्कपिरिन्द्राण्या हवींषि दूषितवान् । अतो वृषाकृपौ क्रुद्धा सा वृषाकपिं शपतीति वदति । तादृशस्वल्पापराधस्य शिरःखण्डनमिति विचित्रः कोपः । सायणस्य

देवलोकस्थेवेन्द्राणी अत्र संवादे । केनचिद्यजमानेन स्वार्थं कृतानि हवींषि किल कपिर्वृषाकपिसम्बन्धी अदूदुषत् ।

अत्रेदं रहस्यम् । नरकासुरो भारतादिषु कथितः कर्णश्च न द्वे व्यक्ती । नरकस्य जनको यो वराहावतारोऽभिहितः । स कृष्णान्नान्यः । स एव कृष्णपुत्रो नरककर्णापरपर्यायो वृषाकपिरैन्द्रो मन्त्रद्रष्टा वेदे । यदि साक्षाद् भूम्याँ यज्ञवराहान्नरको जात इति कथा सत्या तर्हि तदारभ्य भारतकालपर्यन्तं तस्य जीवितं वक्तव्यमप्रसिद्धम् । भारतकाले च तस्य वधश्रवणादेवास्माभिर्नरकासुरस्य सत्ता ज्ञायते न तस्यासुरस्य केनापि विश्रुतेन कर्मणा । तादृशाद्यज्ञपुरुषात्साक्षात्पृथिव्यां जातश्च केवलदुष्टः केवलकामुकश्चासुरोऽभूदिति को वा श्रद्दध्यात् । कृष्णस्य पुत्रेण सहयुद्धं विरोधं चान्ततस्तस्यार्जुनद्वारा मारणं च कथायां नोचितमिति कृत्वा भारतकविर्महाभारतकविर्वा एकमेव विचित्रमार्गेण द्विधा कृतवान् । नरकं कर्णं च । नरकस्य भगवत्पुत्रत्वं यद्यपि न प्रच्छादितवान् तथापि वराहवताराय नीतवान् । कर्णश्च देव्या सत्यया वराह इति कुत्सितः । तस्माद्वाराहस्य तं सुतं चमत्कारेण कृतवान् । कर्णं च बन्धुभ्योऽबहिष्कुर्वन् पितृष्वसुः पुत्रं कृतवान् । या कर्णस्य माता प्रसिद्धा राधा सा कर्णस्य साक्षाज्जनन्येव भवति । न कृत्रिमा माता । या भगवतः कृष्णस्य प्रसिद्धा दयिता राधा तां भारतं भागवतं वा नावादीत् । तथापि तद्रहस्यं कृष्णचैतन्येन दिव्यस्मृत्या ज्ञातम् । कुतः कृष्णप्रिया राधा भारतभागवतयोर्न कथिता । तस्यां कथ्यमानायां तत्पुत्रः कर्णश्च कथनीयः स्यादिति । तां कर्णस्य कृत्रिममातृत्वेन निगूह्य कथितवान्भारते । सैव भगवती राधा कर्णस्य माता । तस्यां कन्यायामेव कृष्णः कर्णमुत्पादितवान् । सैव भूमित्वेन कथिता नरकस्य माता । नरक एव कर्ण इत्यत्रान्यल्लिङ्गं च भवति । ''हतस्य नरक-

स्यात्मा कर्णमूर्तिमुपाश्रितः । तद्वैरं संस्मरन्वीर योत्स्यते केशवार्जुनौ ॥" (भागवतम् २५३. २०) नरकस्यात्मा कर्णमूर्तौ तिष्ठति । को भावः । हतोऽपि नरकः कर्णमाश्रित्यास्त्येवेति । एवं गूढया विधया कर्णनरकयोरभेदो दर्शितो भारते ।

एवं चेत्कथं स्वश्वस्य पुत्रः कर्णः । आसीद्वृषणश्वो नाम कश्चिदार्यः । तस्य तपसा तुष्ट आत्मांशेन मेनानाम कन्या बभूव ।
अत्रेयं भवति ।

अददा अर्भां महते वचस्यवे कक्षीवते वृचयामिन्द्र सुन्वते ।
मेनाऽभवो वृषणश्वस्य सुक्रतो विश्वेत्ता ते सवनेषु प्रवाच्या ॥
ऋक्संहिता १. ५१. १३

हे इन्द्र । सुन्वते । वचस्यवे तव स्तुतिमिच्छते भक्त्या स्तुतिं कुर्वाणायेत्यर्थः । महते वृद्धाय कक्षीवते । अर्भां बालाम् वृचयाम् । अदादाः । नवतरुणी अत्र बालोच्यते । यथा नवतरुणी वृद्धं कामयेत तथाऽकरोरिति माहात्म्यस्तुतिः । किं च हे सुक्रतो । वृषणश्वस्य एतन्नामकस्य भक्तस्य । मेना मेनानामकन्या । अभवः स्त्रीरूपेण भूलोके निजतेजोंशेनावतीर्णोऽसीति भावः । त तव । विश्वा समस्तानि । तातानि प्रसिद्धानि कर्माणि । सवनेषु । प्रवाच्या प्रकर्षेण स्तोतव्यानि । "वृषणश्वस्य मेने" इति सुब्रह्मण्यमन्त्रैकदेशश्चात्र भवति । इन्द्र एव वृषणश्वस्य मेने इत्याहूयते । अत्रेदं ब्राह्मणं शाट्यायनिनाम् । "वृषणश्वस्य मेना भूत्वा मघवा कुल उवास" इति । तां स्वांशभूतां मेनामिन्द्रः पुनश्चकमे । अत्रेदं ब्राह्मणं भवति तांडिनाम् । "वृषणश्वस्य मेना नाम दुहिता तमिन्द्रश्चकमे।" इति । ब्राह्मणे इन्द्रस्य मेनायाः कामनामात्रमुक्तम् । मन्त्रे पुत्रोत्पादनं चोच्यते ।

स्तम्भीद्ध द्यां स धरुणं प्रुषायदृभुर्वाजाय द्रविणं नरो गोः ।
अनु स्वजां महिषश्चक्षत व्रां मेनामश्वस्य परि मातरं गोः ।।

ऋक्संहिता १. १२१. २. कक्षीवान्

(स इन्द्रः) धरुणं धारकम् । द्यां सूर्यम् । स्तम्भीद्ध अस्तम्भयत् । नरः नेता । ऋभुः ऋभ्वात्मक इन्द्रः । गोः सूर्यस्य । आदित्योऽपि गौरुच्यत इति यास्कः । द्रविणं तेजोंशात्मकम् । वाजाय बलाय बलख्यापनायेत्यर्थः । धनं प्रुषायत् असिञ्चत् । तेजसः सेचनं च नार्यां क्षेत्रे बीजस्यावापनम् । यथा लोके बलवान् शत्रुं निगृह्य तस्य धनमादाय यथा काममुपयुनक्ति एवमात्रापीति व्यञ्जनाय सूर्यस्तम्भनपूर्वकं तद्द्रविणस्योपयोजनमुक्तम् । नैसर्गिकमिन्द्रकृतं सूर्यस्तम्भनं द्रविणादानायेति उत्प्रेक्षा । उत्तरार्धेन तस्यैव विवरणं करोति । महिषः लुलायः । स्वजाम् स्वत उत्पन्नाम् । व्रांवृण्वतीम् । अश्वस्य मेनां बडबाम् । अनुचक्षत अन्वपश्यत् स्वयमप्यवृणोदित्यर्थः । तां च । गोः वृषस्य । मातरम् । परिपरिवर्तितवान् । महिषः बडबायां वृषं जनयामासेति विरोधः । ननु प्राचामार्याणां महिषमृगज्ञानमस्ति वा नवेति संशयः ऋक्संहितायां तदनुल्लेखादिति चेत् । माऽभूत्संशयः । "सपक्षनाहिषं मृगम्।" "महिषाँ अधः" इत्यादयः प्रयोगा विद्यन्ते ।

अथ परिहारस्तु महिषः महानिन्द्रः । व्रां कामयमानां अश्वस्य वृषणश्वस्य नामैकदेशे नामग्रहणं । मेनां कन्यां मेनानाम्नाम् । अनुचक्षत अन्वपश्यत् स्वयमपि कामयामासेत्यर्थः । तां च गोर्वृषस्य कर्णस्य मातरम् । परिपरिर्तितवान् । कृवानिति लक्ष्योऽर्थः । अयमेव कक्षीवानृषिः त्वमायसं प्रतिवर्तयो गोरिति गोशब्देन कर्णमाह । तत्स्मारयामो वाचकेभ्यः । वृषणश्वकन्यायां मेनायामिन्द्रः सूर्यतेजोंशेन कर्णं जनयामासेति फलितम् ।

मेना कन्यैव गर्भिणी भूत्वा जातं पुत्रं लोकापवादभयात् विससर्ज । स च स्वश्वस्य पुत्रार्थिनः सूर्यमाराधयतः सूर्यप्रसादान्मिलितः । एवं कर्णस्य पिता स्वश्वः । स्वश्वश्च गन्धर्वजातीयो भवति कर्णस्य गन्धर्वत्वेनानु-कीर्तनात् । गन्धर्वाश्च तुरगरक्षिणस्तद्विक्रेतारश्च । अश्वरक्षासम्बन्धेन तान्गन्धर्वांत्सूतान्वदति जयेतिहासकारः क्वचित् । भारते कर्णस्य पोषकपितुर्नामाधिरथ इति । निगमेस्वश्व इति । उभौ शब्दौ तात्पर्यत तुल्यार्थौ । यस्य शोभना अश्वास्तस्यैवाधिको रथः । पक्षिरथ इत्यादा-विवाधिरथशब्दे रथशब्दो वाहनपरो वा लक्षणया । अयं च स्वश्वो राजैव न साधारणो गृहस्थः ।

एतस्मिन्नेव काले तु धृतराष्ट्रस्य वै सखा ।
सूतोऽधिरथ इत्येव सदारो जाह्नवीं ययौ ।।

महाभारतम् वनपर्व ३०७. १

इति महाभारतश्लोके तस्य धृतराष्ट्रसखत्वेन कीर्तनाल्लिङ्गात् । देशान्तरस्थः कश्चिद्द्विजातीयो गृहस्थः कस्यचिद्राज्ञः सखा भवतीति न श्रद्धेयो हि विषयः । अन्यच्चलिङ्गं विद्यते ।

चर्मण्वत्याश्च यमुनां ततो गङ्गां जगाम ह ।
गङ्गायाः सूतविषयं चम्पामनुपुरीं ययौ ।।

महाभारतम् वनपर्व ३०७.२५

अत्राङ्गदेशः सूतविषय उच्यते । सूतानां विषयो नाङ्गदेशः । तस्य सर्वविधं जातिशोभितत्वात् । सूतस्य विषय इति विग्रहो वक्तव्यः । सूतस्तत्र राजा चेत्तथोक्तिरुपपन्ना । विष्णुपुराणो साक्षादेवाङ्गराज-वंशावल्यामधिरथः कर्णपितोक्तः । प्राग्ज्योतिषदेशश्चादेशात् पूर्वस्यां दिशि विद्यतेऽनुबद्धः । शल्यस्य मद्रवाह्लिकदेशाविवोभावपि कर्णस्य देशौ । अत्रेदेमनुमानम् । कर्णस्य पितुःकालेऽङ्गदेश एक एव तस्य राज्यम् । स चैकतो जरासन्धेनान्यतः कौरवैश्च जितः प्राग्ज्योतिषां प्रति

पलायितः। मालिनीपुरी तत्प्रान्तश्च जरासन्धस्याभूत् । चम्पापुरी तत्प्रान्तश्च कौरवाणाऽभूत् । कर्णः प्रौढो भूत्वा प्राग्ज्योतिषे राज्यस्थापकोऽभूत् । अनन्तरं युद्धे जरासन्धं साधयित्वा मालिनीं साधितवान् । कौरवेभ्यः स्नेहेन चम्पाम् । जरासन्धविजयेन मालिनी-साधनकथा शान्तिपर्वणि विद्यते ।

गतः प्रसक्तानुप्रसक्तो विषयः । प्रकृतमनुसरामः । मेनैव राधा भवति । मेनाशब्दस्य व्युत्पत्तौ यास्को मानयन्त्येना इति मेना इत्याह । मानयन्त्येनामित्येकवचने व्युत्पत्तिः राध्यते आराध्यते सर्वैरिति राधा । एवमुभौ शब्दौ तुल्यार्थौ । मेनाराधयोरैक्ये पौराणिकं लिङ्गं चेदं भवति ।

श्रीकृष्णतेजसोऽर्धेन सा च मूर्तिमती सती ।
एकामूर्तिर्द्विधाभूताऽभेदो वेदेति निरूपितः ।।

ब्रह्मवैवर्तपुराणम् श्री.ज.खं.१३ अध्यायः

सा पूर्वप्रकृता राधा । निगमे इन्द्र एव पुरुषरूपः स्त्रीरूपश्चावतीर्ण एकस्मिन् काल इति प्रमाणैर्वयं ज्ञातवन्तः । कृष्ण इन्द्रस्यावतार इति च । ब्रह्मवैर्तपुराणे गोलोकेश्वरस्यकृष्णस्यार्धभागेन राधाऽर्धभागेन कृष्णश्चावतीर्णावित्युच्यते । अभेदो राधाकृष्णयोर्वेदे निरूपित इति च वदति । उभयोः सामरस्यकरणे मेना वैकुण्ठावेव राधाकृष्णाविति सिध्येत् । ब्रह्मवैवर्तपुराणे राधायाः पिता वृषभानुरुच्यते । निगमे मेनायाः पिताः वृषणश्वः । आद्याक्षरत्रयस्य तत्र शब्देऽर्वाचीनसंस्कृतभाषायम् अश्लीलार्थत्वाद्वृषभानुरिति नाम वृषणश्वशब्दतुल्यार्थकं पुराणकारश्चक्रे । रहस्यरक्षणाय वा परोक्षप्रियत्वाद्देवानाम् । अश्वशब्दो निगमेषु किरणपर्यायश्च भवित । तस्माद्वैदिकपौराणिकयोर्नाम्नोरर्थभेदः ।

अथान्यः संशयः। जयतिहासे कर्णः कुन्त्याः पुत्र इति कथितम् । यदि

कर्णस्य जननी राधा तर्हि सैषा कथा कल्पिता प्रसज्येत । न । राधातः कुन्ती न भिद्यते । कुन्त्याः पृथेति नाम पृथिव्यंशजेति चेदुभयोरंशयोः सामरस्यमुत्तरत्र वक्ष्यामः । पृथिव्यंश इन्द्रस्यार्धांश एव भवति । द्यावापृथिव्योरिन्द्रशरीरत्वात् । प्रमाणमुत्तरत्र दास्यामः । सति सम्भवे निगमेतिहासयोः सामरस्यं कर्तव्यम् । तस्माद्राधाकुन्त्योरभेदपक्ष एवास्माभिराश्रीयते ।

कुन्तिभोज इति पृथापितुर्नाम । कुन्तयो जनपदाः । तेषु भोजः कश्चित्पालकः कुन्तिभोजः । प्रायो गोधनसमृद्धिमन्त एव भोजा उच्यन्ते । तस्मात् कुन्तिभोजो वृषणश्वश्चेन्नापत्तिः । "कुले उवास" इति ब्राह्मणवाक्यात्कन्याया मेनाया वासस्थलं किमपि कुलमिति वक्तव्यम् । पितृकुल इत्यर्थो न चारुः । कन्यायाः पितृकुले वासस्य पृथग्वक्तव्यत्वानवसरात् । सामान्यतः कुलपदं रितश्वां यूथं वदति । तदा साधारणशब्देन विशेषस्य व्यवहारः । कुलशब्देन गोकुलस्य व्यवहार इति यावत् । गोकुलवासो नाम गोकुलसमृद्धिमति ग्रामे वास इति लक्षणया सिध्येत् ।

ननु पृथा कृष्णस्य पितृष्वसेति कथायाः का गतिरिति चेत् । कृष्णस्य पोषकगोपालककुटुम्बे राधाकृष्णपितुः पितृव्यस्थानीय ज्ञातिपुत्री स्यात् । प्रसिद्धिश्च राधा कृष्णस्य पितृष्वसृस्थानीयेति ।

राधाकुन्त्योर्भेदपक्षे कथागोपनस्या नावश्यकत्वम् कृष्णात्पुत्रमुत्पाद्य काचिन्नारीपुनरन्येनोढेतिकथायामेव किमपि वैरस्यम् । सा यदि नान्येनोढा तद्गोपने किमावश्यकत्वम् ।

द्वात्रिंशं प्रकरणम्

## नरकासुरकथा

उक्तं कर्णो नरकासुरो न द्वे व्यक्ती इति । उक्तं चेन्द्राणी पौलोमी सत्यैवेति । सम्प्रति पाठकानां विशदं स्याद्देवी नरकयुद्धे येन कारणेन श्रद्धां भेजे । आत्मनः तष्टानि आत्मनः आत्मपुत्रस्य महावीरस्य जयन्तापरपर्यायस्य जयस्य भर्तुश्च परोक्षं यत्कर्णः अध्वंसयत्तदेवास्याः कोपकारणमिति च प्रागेव सूचितम् । तत्रेयं भवति ।

अवीरामिव मामयं शरारुरभि मन्यते
उताहमस्मि वीरिणीन्द्रपत्नी मरुत्सखा विश्वास्मादिन्द्र उत्तरः ।।

ऋक्संहिता १०. ८६. ९

वीरपुत्ररहितामिव मामवमन्यतेऽयमित्युक्त्वा पुत्रसहितायाः स्वस्याः परोक्षं स्वोद्यानादिभङ्गः कृतो वृषाकपिनेति सूच्यते । एवं सत्या नरकविरोधसङ्गतिः ।

अदितेः कुण्डले वरुणस्य च्छत्रं इन्द्रसम्बन्धी मणिपर्वतश्च नरकेण हताः अत इन्द्रप्रेरणेन कृष्णः नरकपुराय दण्डयात्रामकरोद् इत्यैतिहासिकाः । वैकुण्ठस्येन्द्रप्रेरणं च स्वान्तर्यामिप्रेरणान्नातिरिच्यते । अदितेः कुण्डले नरकेण हृते इत्यत्र द्वेधाऽर्थसङ्गतिः । अदितिः पराशक्तिः कुण्डलिनी याऽध्यात्मम् । तस्याः कुण्डले च श्रवणद्वारा निर्यन्तौ शरीरं सर्वमावृण्वानौ ज्योतिर्विशेषाविव भवतः । तदस्माभिः कुण्डलाहरणे व्याख्यातम् । ते यावत्कर्णस्य तिष्ठतस्तावत्सोऽवध्यः

सुरासुरैः । अतस्तदाजहरणायेन्द्रप्रेरणं नामान्तर्यामिप्रेरणं भगवतो वैकुण्ठस्यैत्येकः पक्षः । अदितिः कृष्णस्य मातैवात्र । तस्याः कुण्डले सुप्रसिद्धमहामूल्यमणिनिर्मिते (अधुनातनकोहिनूरमणिवत्) कर्णौ युद्धे यादवान् जित्वाऽपहृतवान् । तयोः पुनराहरणाय कृष्णस्यान्तर्यामि-प्रेरणमनुसृत्य गमनमित्यपरः पक्षः ।

वारुणच्छत्रं च यदुसम्राजः बहुमुक्ताभूषितं महार्घं राजकीयं नरकस्य च्छत्रं स्यात् । श्रीहर्षचरिते बाणः ईदृशस्य राजकीयच्छत्रस्य वारुणस्यैव बहुमूल्यवत्तरस्य बहुप्रभावस्य वर्णनं चक्रे । तच्च प्राग्ज्योतिषेश्वरस्य पूर्वार्जितं तेनैव श्रीहर्षाय किलोपायनत्वेन दत्तम् । अस्य सत्यत्वं यथा कथंचिदस्तु । तथापि तादृशच्छत्रं प्राग्ज्योतिषेऽस्तीति कवेर्भावोऽस्माभिर्लक्षणीयः ।

केचित्तु वारुणं छत्रं कतिपयपुराणवाक्यबलेन नरकासुरेण वरुणाद्-अपहृतमिति वदन्ति । ते देवतामाहात्म्यानभिज्ञा अन्धाः । भूलोके वसता देवलोको मनसापि परिभवितुमशक्यः । वरुणस्य सर्वेषामसतां नियन्तुः छत्रं मानवशरीरः कथमपहर्तुं शक्नुयात् । तस्मात्तत् वरुणदेवताकं छत्रमित्येवार्थः साधुः ।

इन्द्रेण हृतछत्रेण हृतकुण्डलबन्धुना ।
हृतामराद्रिस्थानेन ज्ञापितो भौमचेष्टितम् ॥

स्कं. १०.पु.५९-१

इति छत्रं इन्द्रसम्बन्ध्येवोक्तम् । यद्ययमिन्द्रो वैकुण्ठ एव स्यात्तदा-ऽन्तर्यामिशरीरभेदेन प्रेरकप्रेर्यभावो ज्ञापकज्ञाप्यभावश्च । साक्षाद् भगवत इन्द्रस्य सर्वेश्वरस्य रोमापि चालयितुमशक्यमन्यैः । इन्द्रस्यासुरबाधा-कथाः काश्चिदवतारसम्बन्धिन्यो भवन्ति । काश्चिदाध्यात्मिक्यो

जीवस्यासुरबाधाज्ञपिकाः । इन्द्रो हि सर्वस्य जगतो जीवरूपः ।

रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय ।
इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश ।।

ऋक्संहिता ६. ४७. १८

इत्युक्तत्वात् ।

मणिपर्वतश्चापि यदूनां देव्या उद्यानगतः स्यात् । यदीन्द्रादपहृतः सः । भारतेतिहारकारो महाभारतकारो वा नरकस्य वधं कुण्डलच्छत्र-मणिपर्वतानां पुनः प्रत्यर्पणं च वदति । तस्यात्मा कर्णमूर्तिम् आश्रित्यानन्तरमासीदिति च भणति ।

वस्तुतस्तु भगवान्नरकेण युद्धं न कृतवान् । परन्तु तत्र गत्वा साम्नैव मणिकुण्डलादीन्यानीतवानिति वक्तव्यम्। कुण्डलाहरणकथा तत्र द्रष्टव्या । अन्याश्च काश्चिदसुरमायाः कर्णात्प्रतिगृहीता भगवता । तत्रेयं भवति ।

तदिन्नुते करणं दस्म विप्राहिं यद् घ्नन्नोजो अत्रामिमीथाः ।
शुष्णस्य चित्परिमाया अगृभ्णाः प्रपित्वं यन्नप दस्यूँरसेधः ।।

ऋक्संहिता ५. ३१. ७

तृतीयपादे सायणस्येयं व्याख्या । "शुष्णस्य चित् एतन्नामकस्यासुरस्य सुबन्धिनीर्मायाः युवतीः पर्यगृभ्णाः परिगृहीतवानसि।" अत्र पर्यगृभ्णा इति पदेन प्रतारिताः पूर्वे एतिहासिकाः कृष्णस्य नरकासुरषोडशसहस्रस्त्रीहरणकथा कल्पिता । वत्सुतो माया अद्भुताः सिद्धयः । ताः कर्णात्परिगृहीतवानित्येव साधीयानर्थः । ऐतिहासिकैस्तु यदेतन्मन्त्रलिङ्गच्छुष्णस्त्रीपरिग्रहणं भगवतः कल्पितं तल्लिङ्गं शुष्ण एव नरक इत्यत्रान्यत् ।

## त्रयस्त्रिंशं प्रकरणम्

# भगदत्तः कः?

नरकवधादनन्तरं तस्य राज्ये स्थापितः भगदत्तो नरकपुत्र इति भारते दृश्यते । स भगदत्तः कः । किं कर्णस्य पुत्रः । न । स कर्ण एव भवति । नरकवधस्य कल्पितत्वात्तत्र राजा कश्चनतद्वधानन्तरं वक्तव्यः । स नरकादभिन्नश्च भाव्यः । तस्मात्कर्णस्य नामान्तरेण भगदत्तशब्देन तं वर्णितवन्तः ।

भगेन सूर्येण दत्तो भगदत्त इति नाम निर्वचनम् । मेना सूर्यप्रसादेन भगवतो वैकुण्ठात् सूर्यांशं पुत्र लेभे । विना तपो न काचिद्देवता स्वांशं पुत्रं दद्यात् । तस्मान्मेनायास्तपो भगस्य प्रसादश्च सुलभमनुमेयौ । कर्णस्य सूर्यपुत्रत्वोक्तिश्चात्र समर्थिका भवति। यो यत्प्रसादलब्धस्तं तस्य पुत्रं भक्त्या वदन्ति । एतेन पाण्डवानां दैवपुत्रत्वं च व्याख्यातम् । इतश्च भगदत्तः कर्णः ।

> निहत्य तं नरपतिमिन्द्रविक्रमं सखायमिन्द्रस्य तथैन्द्रिराहवे ।
> ततोऽपरांस्तव जयकांक्षिणो नरान्बभञ्ज वायुर्बलवान्द्रुमानिव ।।
>
> महाभारतम्, द्रोणपर्व २९-५७

इत्यादौ भगदत्त इन्द्रस्य सखा कथितः ।

> नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते ।
> यस्येदमप्यं हविः प्रियं देवेषु गच्छति विश्वस्मादिन्द्र उत्तरः ।।
>
> ऋक्संहिता १०. ८६. १२

इति निगमे "यमिमं त्वं वृषाकपिं प्रियमिन्द्राभिरक्षसि" (ऋक्संहिता १०. ८६. ४) इति प्रागुदाहृते च वृषाकपिः इन्द्रस्य सखोक्तः । भगदत्तस्यासुरपुत्रस्य स्वयमसुरस्येन्द्रसखत्वमिदं मन्त्रलिङ्गं विना कथं वक्तुं शक्येत । "वैरिणं जहि दुर्धर्षं भगदत्तं सुरद्विषम्।" (महाभारतम्, द्रोणपर्व २९-४४) इति तस्य सुरद्विट्त्वमुक्तं चात्रानुसन्धेयम् ।

तस्य वैष्णवास्त्रं कृष्णो यदात्मना पार्थं प्रच्छाद्य धृतवान् तत्र "त्वमायसमि" ति प्रागुदाहृतमन्त्रो लिङ्गम् । यत्तस्य नागः शत्रुमर्दनः स कर्णस्य रथान्नातिरिच्यते ।

तमापतन्तं द्विरदं दृष्ट्वा क्रुद्धमिवान्तकम् ।
चक्रेऽपसव्यं त्वरितः स्यन्दनेन जनार्दनः ।। इति भारतोक्तं "वङ्कू वातस्य पर्णिनेति" (ऋक्संहिता ८. १. ११) मन्त्रलिङ्गं स्मारयति ।

तस्माद्भगदत्तः कर्णान्नापरः। ननु कर्णस्य परदेशाधिपत्यात्कौरवानुचरत्वं नोपपद्यत इति चेत् । तदिष्टम् । कर्णः कौरवस्य सखैव भवति नानुचरो भटः । न मन्त्री सभास्तारः युष्माभिरपि तस्याङ्गराजत्वात्परदेशाधिपत्यमभ्युपगतम् । तस्मान्न कश्चिद्विरोधः ।




Bhagavan Ramana Maharshi and Ganapati Muni
by Madam Jane Adams

चतुस्त्रिंशं प्रकरणम्

# बलरामः कः?

## सितासितौ केशौ

यदुक्तं प्रागेव सर्वेश्वरस्य सितासितौ केशौ रामकृष्णाविति तयोः केशयोः किरणात्मकत्वं बोध्यम् ।

त्रयः केशिन ऋतुथा वि चक्षते संवत्सरे वपत एक एषाम् ।
विश्वमेको अभि चष्टे शचीभिर्ध्राजिरेकस्य ददृशे न रूपम् ॥
ऋक्संहिता १. १६४. ४४

अत्र पूर्वपादस्येयं सायणव्याख्या । केशस्थानीयप्रकृष्टरश्मियुक्तास्त्रयोग्न्यादित्यवायवः ते च ऋतुथा ऋतुकाले विचक्षते विविधलक्षणां भूमिं पश्यन्ति । वायुरिति मध्यमस्थानस्येन्द्रस्य देवस्य विभूतिभेदः । भूमेः सम्बन्धादस्य तत्र ग्रहणम् । अनेन किं ज्ञातम् । केशशब्दो रश्मिपर्यायो निगमे प्रसिद्ध इति ज्ञातम् । तावेव सितासितौ केशौ । सितः सूर्यस्य । सर्वेषां रश्मीनां समष्टिरश्मेः सितत्वात् । असितो मध्यमस्य । अदृश्यत्वाद्भूसम्बद्धवायुपक्षे । द्युवितानरूपहरितवर्णत्वादाकाशसम्बद्धेन्द्रपक्षे । "इन्द्रे नि रूपा हरिता मिमिक्षिरे" (ऋक्संहिता १०. ९६. ३) इत्युदाहृतमन्त्रपादोऽत्र लक्षीकर्तव्यः । किं सम्पन्नम् । रामः सूर्यस्यांशः । कृष्ण इन्द्रस्य ।

## अहिर्बुध्न्यः

अन्यथा रामस्य तत्त्वं परीक्षामहे । प्रागुक्तं शेषस्यांशो बलदेव इति । शेषश्च भूभारवाही सहस्रफणः कश्चनः फणी । कोऽयम् । यदि पश्यामः

भूमिर्गोलम् । तस्या नास्त्यधः नास्त्युपरिप्रदेशः । न स्तः पार्श्वौ यत्र यत्र पश्यामस्तत्र तत्र तलमस्माकं खण्डे तथा चामरिकायाम् । एवं स्थिते भूमेर्मूले स्थितः फणी कथं सम्भाव्यः । सम्प्रति प्रकृतिशास्त्रज्ञाः सूर्य एव निजया शक्त्या भूमिं ग्रहानितरांश्च बिभर्तीति । स एव पौराणिकैः शेष इति कथ्यते । तस्य सहस्रं करा एव शेषस्य सहस्रं फणाः । स भगवतः पुरुषस्य शय्यात्वेन वर्णितः तन्मण्डलान्तरवर्तित्वाद् भगवन्मूर्तेः । पाञ्चरात्राश्च वासुदेवाज्जातं विज्ञानमयं कूटस्थजीवं सङ्कर्षणं वदन्ति । वासुदेव आकाशशरीरो महेन्द्रः । विज्ञानमयः कूटस्थजीवश्च सूर्यः । सूर्यस्य विज्ञानदेवतात्वं "धियो यो नः प्रचोदयात्" इति मन्त्रवर्णात् अन्याभिश्चोपनिषद्वाग्भिर्वेदान्ते प्रसिद्धम् । तस्मात्पाञ्चरात्राणां सङ्कर्षणः सूर्य एव भवति । प्रसङ्गात्प्रद्युम्नानिरिद्धौ च वदामः । प्रद्युम्नश्च मनसो देवता सोमः । अनिरुद्धश्चाहङ्कारस्य देवता प्राणः ।

प्रकृतमनुसरामः । न केवलं फणिरूपो देवः पुराणेषु निगमेषु चोच्यते अहिर्बुध्न्य इति । एतन्नामैव मूलं शेषो भूबुध्नेवर्तत इति पुराणकथायाः ।

अब्जामुक्थैरहिं गृणीषे बुध्ने नदीनां रजःसु षीदन् ।।
मा नोऽहिर्बुध्न्यो रिषे धान्मा यज्ञो अस्य स्त्रिधदृतायोः ।।

ऋक्संहिता ७. ३४. १६-१७

अब्जामन्तरिक्षप्रभवं अहिं उक्थैः गृणीषे स्तुहि । यः नदीनां अपां रजःसु स्थानेषु सर्वासु दिक्षु भूमिं परितः बुध्ने मूले सीदन् अस्ति । उत्तरस्यां प्रार्थना । ननु कथमयं सूर्यः । सूर्यस्य किरणसङ्घात एव । चतुर्दिशमपां बुध्ने यो वर्तते स एवात्राहिः कथ्यते । स एवाहिः अपः भूमितः हृताः गृह्णंस्तिष्ठति। तच्छुष्णप्रकरणे व्याख्यातम् । नन्वहिरेव जलं गृह्णंस्तिष्ठतीत्यत्र किं प्रमाणम् । सन्ति परः शता मन्त्रा अहिनाग्रस्ता आपो भवन्तीत्यत्र । अयं तु विशेषः । तत्राहिरसुरत्वेन वर्ण्यते । अत्र

देवतात्वेन। मेघस्येवोभयथा वर्णनं सङ्गच्छते । भूधारकत्वाद्देवत्वम् । जलशोषणेन तपनादसुरत्वमिति । तस्य जलग्रसने कानिचिदुदाहरणानि दर्शायामः ।

दासपत्नीरहिगोपा अतिष्ठन् निरुद्धा आपः पणिनेव गावः ।
अपां बिलमपिहितं यदासीद् वृत्रं जघन्वाँ अप तद् ववार ।।

ऋक्संहिता १. ३२. ११

त्वमध प्रथमं जायमानोऽमे विश्वा अधिथा इन्द्र कृष्टीः।
त्वं प्रति प्रवत आशयानमहिं वज्रेण मघवा वि वृश्चः।।

ऋक्संहिता ४.१७.७

त्वमिन्द्र स्रवितवा अपस्कः परिष्ठिता अहिना शूर पूर्वीः ।
त्वद्वावक्रे रथ्यो न धेना रेजन्ते विश्वा कृत्रिमाणि भीषा ।।

ऋक्संहिता ७. २१. ३

वावक्रे निर्गच्छन्ति। वकि कोटिल्य इति धातुः । धेनाः नद्यः । सूर्यस्य रसशोषणं जलधारणं च प्रागेव व्याख्याते शुष्णप्रकरणे ।

किं पर्यवसन्नम् ईश्वरस्य सितकेशः शेषश्च न द्वाविति सिद्धम् । तस्मादस्ति सामरस्यं सितकेशावतारवादिनां शेषावतारवादिनां च रामविषये ।

## का रेवती

उक्तं रामः सूर्यस्यैवावतारः स्यादिति । राममहिष्याः रेवत्याः किं तत्त्वम् ।

ऋतावरी दिवो अर्कैरबोध्या रेवती रोदसी चित्रमस्थात् ।
आयतीमग्न उषसं विभातीं वाममेषि द्रविणं भिक्षमाणः ।।

ऋक्संहिता ३. ६१. ६

अत्रोषोदेवी रेवत्युक्ता ।

प्र बोधयोषः पृणतो मघोनि अबुध्यमानाः पणयः ससन्तु ।
रेवदुच्छ मघवद्भ्यो मघोनि रेवत् स्तोत्रे सूनृते जारयन्ती।।''

ऋक्संहिता १. १२४. १०

अत्र मघवद्भ्यः स्तोत्रे च रेवदुच्छेत्युषा उच्यते ।

कुवित्स देवीः सनयो नवो वा यामो बभूयादुषसो वो अद्य ।
येना नवग्वे अङ्गिरे दशग्वे सप्तास्ये रेवती रेवदूष ।।

ऋक्संहिता ४. ५१. ४

उषेति वसतेर्बहुवचनम् । सनयः पुराणः । अत्रोषसः रेवत्य उच्यन्ते तासां रेवद्वासश्च भक्तजने कथ्यते । अन्यासां स्त्रीदेवतानां न रेवतीशब्दः प्रयुक्तो दृष्टः । तस्माद्रेवती उषास्तत्त्वत इति निश्चेतुं शक्यते । रेवती नक्षत्रं पूषा देवतेति नक्षत्रपर्यायत्वे वा तस्याः पूषदेवतात्वम् । या स्त्री यद्देवताका सा तस्य शक्तिः । उषाश्च सूर्यस्य शक्तिः । तस्मात्तस्मिन्पक्षेऽपि रेवत्युषाः ।

## बलो वलश्चैकार्थौ

बलो वलश्चैकार्थौ शब्दौ स्याताम् । वलशब्दो मेघपर्यायेषु पठितः अहिशब्दश्च । मेघस्य नीरांशो नात्राहिर्वलो वा । ज्योतिरंश एव । स च रसहारकात्सौराज्ज्योतिषो नातिरिच्यते । जलांशस्तेन हृतं धनम् । वलस्य बलस्य च पदयोरभेदात्साम्प्रतिकभाषायामिन्द्रो बलारिरुच्यते । प्राचां भाषायां वलारिः । एतन्मूलकमेव बलारामस्य बलनामकत्वम् ।

## रौहिणः

रौहिणशब्दोऽपि वलाहिपर्याय एव वर्ण्यते । "यो रौहिणमस्फुलद्वज्रबाहु-र्द्यामारोहन्तं स जनास इन्द्रः ।।" (ऋक्संहिता २. १२. १२) इति मन्त्रवर्ण-

प्रयोगश्च भवति । रोहिणी भूमिः । तत्पुत्रत्वं च सूर्यरश्मेर्भूम्यावेशादेव रसादानात् । आवेशो गर्भे पतनं रसादानादनन्तरमूर्ध्वमागमनं जन्मोपचर्यते । तस्य द्युगर्भाद्भूगर्भं प्रत्यागमनेमेव योगमायाकृतं गर्भाद्गर्भान्तराय सङ्क्रमणम् । प्राचां भाषायां रौहिण एवार्वाचां रौहिणेयः ।

## व्यक्तिसम्बन्धः

एवं बलदेवस्याधिदैविकं तत्त्वं व्याख्यातम् । अथानन्तरा चर्चा । किं पौराणिकाः आधिदैविकतत्त्वमेव बलरामावतारतया कल्पितवन्तः । उताहो तस्यावतारस्तस्मिन्कालेऽभूत् । अभूदेव । कर्ण एव बलरामः कानि प्रमाणानि ।

१. कर्णः सूर्यस्यावतारः । बलरामश्च सूर्यतत्त्वम् ।

२. बलरामो रौहिणेयः कर्णश्च । कथं कर्णो रौहिणेयः । भौमत्वात् । भौमो नरक इति प्रसिद्धिरस्ति । देवी मेना राधापरपर्याया भूमेरवतारः । ननूक्तं सा इन्द्रस्यैव योषिदवतार इति । नैष दोषः । विश्वात्मकस्येन्द्रस्य द्वौ भागौ द्यौः पृथिवी चेति । अत्रेयं भवति ।

> य इमे रोदसी उभे अहमिन्द्रमतुष्टवम् ।
> विश्वामित्रस्य रक्षति ब्रह्मेदं भारतं जनम् ।।

ऋक्संहिता ३. ५३. १२

तयोर्भागयोर्दिवोंशेन कृष्णोऽभूत् । भूमेरंशेन देवी राधा । यत्सत्या भूमेरंश इति केषाञ्चित्कल्पनं तदसत् । सा साक्षादिन्द्राण्या अवतारः सत्यभामैव पट्टमहिषी न रुक्मिणी । प्रकृते राधेयो भौमो रौहिणेयश्चेति एकार्थानि पदानि भवन्ति । अयं विशेषः । रोहिणीभूमिशब्दौ साक्षाद्भूमिपर्यायौ । राधाशब्दो मेनापरः अवतारपर इत्युक्तं भवति । गर्भाद्गर्भाय सङ्क्रान्तिराधिदैविक्येव कथा न चरित्रम् ।

३. बलरामः कौरवेऽतिप्रीतिमान् कर्णश्च । स्वभावैक्यसूचनादिदं कारणम् ।

४. कर्णस्य पत्नी रेवत्युच्यते ।

वृषाकपायि रेवति सुपुत्र आदु सुस्नुषे ।
घसत्त इन्द्र उक्षणः प्रियं काचित्करं हविर्विश्वस्मादिन्द्र उत्तरः ।।

ऋक्संहिता १०. ८६. १३

नाहमिन्द्राणीत्यनेन इन्द्रेण वृषाकपेर्हविर्देवेष्वगच्छत् तात्पर्यतः स देवाराधकः सत्य इति कथिते सन्तुष्टो वृषाकपिः सर्वकर्मसु स्वसहायां रेवतीमेव तस्य सुकृतस्य कर्त्रीं द्योतयन्ननया श्लाघते । हे वृषाकपायि वृषाकपेर्मम पत्नि इत्यादि । सायणस्तु वृषाकपेर्ममातः इति इन्द्राणीपरत्वेन योजयति मन्त्रम् । भार्यावाचकस्य प्रत्ययस्य सम्बन्धमात्रपरतया सङ्कोच एवारमणीयः तत्रापि मातृपरतया नितान्तं अरमणीयम् । सर्वं सूक्तं परस्परसंवादात्मकं मत्वा स एतादृशं प्रमादमकरोत् । तेनैवन्त्यो मन्त्रः स्वतन्त्रमृषिवाक्यमेव कृत्वा व्याख्यातम् । रेवत्याः प्रत्यक्षे परोक्षे वा ईदृशी स्तुतिर्न विरुध्यते । प्रत्यक्षे प्रत्यक्षस्तुतिः परोक्षे मनःकल्पितां प्रत्याकाशभाषणं यथा नाटकादिषु। ननु वृषाकपिरिन्द्रः तस्य पत्नीति सम्बोधनस्येन्द्राणि-परत्वमिति चेत् रूढं विसृज्य योगपर्यन्तमनुधावनमसङ्गतम् । वृषाकपिश्च ऐन्द्रे रूढः । नेन्द्रे ।

५. "शुष्णमनन्तैः परियासि वधैः" (ऋक्संहिता १. १२१. ९) इति कर्णः अनन्तशब्देन साक्षादुक्तः । कुत ऐतिहासिकाः द्वाविवादर्शयन्। कर्णस्योपासनार्थम् । युद्धे शत्रुणा हतस्योपासनं कर्तुं श्रद्धा न भवति । अतः उपासनार्थं रामं प्रत्येकं कृतवन्तः । अस्ति च रामशब्दः

